Somadeva's contact with the Krishnaraya III of Rastrakuta provides the proof for deciding the poet's date which is stated to be the 10th cen. A. D.

In view of his countrywide contact and vast erudition Somadeva's work became more valuable. He was well-read scholar and master of vocabulary. He wrote in what is known as the Gandi style in which the words are used in pomp. The first characteristic of Somadeva's style which strikes even a cursory reader is his inordinate love for long compounds. But the taste of his age is responsible for this, because from the early centuries of the Christian era onwards the ornate style full of figures and long compounds was recognized as constituting the very life of sanskrit prose. Somadeva naturally followed this dictum of rhetoricians when he wrote pages after pages of strings of long compounds

The next peculiarity of the style is his fondness for puns. Throughout his work Somadeva has given full scope to play upon words for which his wonderful mastery of the vast vocabulary of Sanskrit language specially fitted him. Most of his lengthy descriptions are full of passages which would be meaningless and absurd if the words were taken in their ordinary sense. There is some hidden meaning in them which can hardly be found out without the help of a special commentary. The sanskrit writers on rhetoric themselves regard this play upon words as only a secondary ornament of real poetry.

Another mannerism, which is much evident in the present work, is the uses of a number of figures of speech which are based on paronomastic words and epithets, appealing to our intellect and not to our heart. He is

specially fond of Akshepa, Utpreksha, Upamā, Rupaka, Virodha, Svabhāvokti, Sahokti and Nidars'ana. He is also fond of alliteration and often uses out-of-the-way words for its sake. Another admirable characteristic of his writing is his possessing the power of lengthy description. While describing in detail the rainy season, the winter, the hot season, the temple of the Goddess Chandamāri and the lovely garden, named Smar-Saumanas, Somadeva uses very obscure and paronosmastic words, long compounds and numerous epithets to a great extent. In describing things, with the skilful use of Vakroti, Somadeva is said to have no rival except Bana. The allusions to a strange mythological events also add to the beauty of his style. His memory surveys the whole field of Indian history and mythology. ' Similarly, his power of imagination plays an important part in the present work. In his imagary, thought succeeds thought and one simile is followed by another in such a way that one loses sight of the master idea

Apart from these many superior merits of the present author, his style is subject to a stern criticism owing to the numerous big compounds, double meaning and obscure words, lengthy descriptions and long sentences which prevent an ordinary reader from following the thread of the narrative. His extensive acquaintance with Sanskrit vocabulary brings in words and expressions not familiar to even advanced student of the sanskrit language. His philosophical references and technical words make the task most difficult and inaccessible.

From this present work it seems that Somadeva was not only a great poet but a first-rate logician, a good philosopher, great politician and highest preceptor. In the pro-

vince of poetry, he has displayed his great skill in the present composition owing to the fact that he had a great command over the Sanskrit language and vast vocabulary as well as beautiful expressive power at his credit Somadeva being the master of idea, his imagination took rapid and sublime flights Yas'astilaka champu and Nitivakyamrita are reckoned as his master-pieces As for his logical advancement, there are not a few references in the Yas'astilaka champu which can judge his progressive and unrivalled intellectual capacity in that field There is one verse stated below which determines his logical ability —

आजन्मसमभ्यस्ताच्छुष्कात्तर्कात्तृणादिव ममास्याः ।
मतिसुरभेरभवदिदं सूक्तिपयः सुकृतिनां पुण्यैः ॥

As regards his proficiency in the politics, his Nitivakyamrit is a proof Moreover, in the Uchchhvas III of the Yas'astilaka champu, he has discussed many political points in detail in connection with the king Yas'odhara's life-account. Though there are no other separate treatises on religious topics, the last two Uchchhvasas of the present book reveal his Teachership in regard to the religious laws and cutoms. He was well versed in grammar too In short he was acquainted with all branches of knowledge such as, poetical composition, science of logic, philosophy, grammar, politics, history geography etc Not only was he an ardent student of the Jaina philosophy but also he was well conversant with other systems and thought in India as well In the fourth chapter of Yas'astilaka champu he gives us the list of so many poets whose works were fully known to Somadeva He has discussed the points relative to astronomy and astrology in

this work now and then. In brief, he was all round scholar dealing with every branch of knowledge through his deep and sharp talent. As regards the highest type of genius he was of opinion that there was no monopoly of talent assigned to a particular class or caste. In poetry also he has a cosmopolitan attitude which is revealed through the following verse :—

लोको युक्तिः कलाश्छन्दोऽलङ्काराः समयागमाः ।
सर्वसाधारणाः सद्भिस्तीर्थमार्ग इव स्मृताः ॥

Somadeva's two best compositions one Yas'astilaka champū under reference and other Nitivākyāmrita are considered to be the new region in the rich domain of sanskrit literature. Besides these two, he is said to have been author of the other three works such as Yukti-chintamani, Mahendra-matali-Sanjalpa and S'ṇṇavatiprakaraṇa which are not made available so far to the public. The Parbhani inscription adds to his works a Syādvādopniṣad and numerous Subhāṣitas, which are also not yet brought in limelight.





श्रीसोमदेवसूरिविरचिता

# यशस्तिलकचम्पूः

## प्रथम आश्वासः ।

### वन्दनम् ।

१. श्रियं कुवलयानन्दप्रसाधितमहोदयः ।
देवश्चन्द्रप्रभः पुष्याज्जगन्मानसवासिनीम् ॥ १ ॥
श्रियं दिश्यात् स वः श्रीमान् यस्य सन्दर्शनादपि ।
भवेत् त्रैलोक्यलक्ष्मीणां जन्तुः कन्तु निकेतनम् ॥ २ ॥
श्रियं देयात् स वः कामं यस्योन्मीलति केवले ।
त्रैलोक्यमुत्सवोदारं पुरमेकमिवाऽभवत् ॥ ३ ॥
यस्याऽङ्घ्रिनखनक्षत्रविजृम्भाय नभस्यते ।
नमज्जगत्त्रयीपालकुन्तलाभोगडम्बरः ॥ ४ ॥
बालारुणायते यस्य पादद्वितयमण्डलम् ।
प्रह्वत्रिविष्टपाधीशकिरीटोदयकोटिषु ॥ ५ ॥
नखोज्जृम्भकराभोगकेसरं यत्क्रमद्वयम् ।
नम्रामरवधूनेत्रदीर्घिकास्वम्बुजायते ॥ ६ ॥
यत्पदस्तुतिसम्भाराद् भुवनत्रयनायकाः ।
वाङ्मनोदयसिद्धीनां सिद्धादेशादिवेशते ॥ ७ ॥
नमः सत्कीर्तिपूताय विश्वदृश्यैकमूर्तये ।
नमः शमसमुद्राय जिनेन्द्राय पुनः पुनः ॥ ८ ॥

अपि च।

भूर्भुवःस्वस्त्रयं यत्र वेलाचलकुलायते।
अपाराय नमस्तस्मै जिनबोधपयोधये ॥ ९ ॥

किञ्च।

मनेः सूते बीजं सृजति मनसश्चक्षुरपरं
यदाश्रित्याऽऽत्माऽयं भवति निखिलज्ञेयविषयः।
विवर्तैरत्यन्तैर्भरितभुवनाभोगविभवैः
स्फुरत्तस्यं ज्योतिस्तदिह जयतादक्षरमयम् ॥ १० ॥

## कविकाव्यविचारः।

सर्वज्ञकल्पैः कविभिः पुरातनैरवीक्षितं वस्तु किमस्ति सम्प्रति।
ऐदंयुगीनस्तु कुशाग्रधीरपि प्रवक्ति यत्तत्सदृशं स विस्मयः ॥११॥
कृतीः परेषामविलोकमानस्तदुक्तिवक्ताऽपि कविर्न हीनः।
कृतेक्षणो राजपथेन सम्यक् प्रयानिव प्रत्युत विस्मयाय ॥ १२ ॥
कृत्वा कृतीः पूर्वकृताः पुरस्तात् प्रत्यादरं ताः पुनरीक्षमाणः।
तथैव जल्पेदथ योऽन्यथा वा स काव्यचोरोऽस्तु स पातकी च॥१३॥
असहायमनादर्शं रत्नं रत्नाकरादिव।
मत्तः काव्यमिदं जातं सतां हृदयमण्डनम् ॥ १४ ॥
उक्तयः कविताकान्ताः सूक्तयोऽवसरोचिताः।
युक्तयः सर्वशास्त्रान्तास्तस्य यस्याऽत्र कौतुकम् ॥ १५ ॥

किञ्चित् काव्यं श्रवणसुभगं वर्णनोदीर्णवर्णं
किञ्चिद्वाच्योचितपरिचयं हृद्यमत्कारकारि।
अत्राऽसूयेत् क इह सुकृती किन्तु युक्तं तदुक्तं
यद्युत्पत्त्यै सकलविषये स्वस्य चाऽन्यस्य च स्यात् ॥ १६ ॥

आजन्मसमभ्यस्ताच्छुष्कात्तर्कात्तृणादिव ममाऽस्याः।
मतिसुरभेरभवदिदं सूक्तिपयः सुकृतिनां पुण्यैः ॥ १७ ॥
वाच एव विशिष्टानामनन्यसमवृत्तयः।
स्वस्याऽनिशायिनं हेतुमाहुः कान्ता लता इव ॥ १८ ॥
वागर्थः कविसामर्थ्यं त्रयं तत्र द्वयं समम्।
सर्वेषामेव वक्तॄणां तृतीयं भिन्नशक्तिकम् ॥ १९ ॥

लोको युक्तिः कलाश्छन्दोऽलङ्काराः समयागमाः ।
सर्वसाधारणाः सद्भिस्तीर्थमार्ग इव स्मृताः ॥ २० ॥
अर्थो नाऽभिमतं शब्दं न शब्दोऽर्थं विगाहते ।
स्त्रीवृन्दमिव मन्दस्य दुनोति कविता मनः ॥ २१ ॥
दुर्जनानां विनोदाय बुधानां मतिजन्मने ।
मध्यस्थानां च मौनाय मन्ये काव्यमिदं भवेत् ॥ २२ ॥
सुकविकथामाधुर्यप्रबन्धसेवातिवृद्धजाड्यानाम् ।
पिचुमन्दकन्दलीष्विव भवतु रुचिर्मद्विधोक्तिषु बुधानाम् ॥ २३ ॥
न गद्यं पद्यमिति वा सतां कुर्वीत गौरवम् ।
किन्तु किञ्चित् स्वसंवेद्यमन्यत् सुखमिव स्त्रियाः ॥ २४ ॥
त एव कवयो लोके येषां वचनगोचरः ।
सपूर्वोऽपूर्वतामर्थो यात्यपूर्वः सपूर्वताम् ॥ २५ ॥
ता एव सुकवेर्वाचस्तिरश्चामपि याः श्रुताः ।
भवन्त्यानन्दनिष्यन्दामन्दरोमाञ्चहेतवः ॥ २६ ॥
न चैकान्तेन वक्रोक्तिः स्वभावाख्यानमेव वा ।
बुधानां प्रीतये किन्तु द्वयं कान्ताजनेष्विव ॥ २७ ॥
अबुधेऽप्युक्तियुक्तिज्ञे कवीनामुत्सवो महान् ।
गुणाः किं न सुवर्णस्य व्यज्यन्ते निकषोपले ? ॥ २८ ॥
अवक्ताऽपि स्वयं लोकः कामं काव्यपरीक्षकः ।
रसपाकानभिज्ञोऽपि भोक्ता वेत्ति न किं रसम् ? ॥ २९ ॥
वृथा वक्तुः श्रमः सर्वो निर्विचारे नरेश्वरे ।
प्राज्यभोज्यविधिः कः स्यात्तृणस्यादिनि देहिनि ? ॥ ३० ॥
यः पार्थिवत्वसामान्यान्माणिक्याश्मसमागमः ।
पार्थिवः पार्थिवो नूनं वृथा तत्र कवेः श्रमः ॥ ३१ ॥
अङ्गनावद्गिरोऽगण्याः प्रायेणाऽन्यपरिग्रहात् ।
स्वयं विचारशून्यो हि प्रसिद्ध्या रज्यते जनः ॥ ३२ ॥
यः स्वयं कवते नैव यश्चोक्तौ मूढधीश्वरः ।
मरणादपि दुःखाय काव्यकीर्तिस्तयोः पुरः ॥ ३३ ॥
अन्तःसारं भवेद्रत्नं बहिः काचं च सुन्दरम् ।
यथा तथा कवेः काव्यमकवेश्च विभाव्यताम् ॥ ३४ ॥

निःसारस्य पदार्थस्य प्रायेणाऽऽडम्बरो महान् ।
न हि स्वर्णे ध्वनिस्तादृक्कांसे यादृक् प्रजायते ॥ ३५ ॥
काव्यकथासु त एव हि कर्तव्याः साक्षिणः समुद्रसमाः ।
गुणमणिमन्तर्निदधति दोषमलं ये बहिश्च कुर्वन्ति ॥ ३६ ॥
आत्मस्थितेर्वस्तु विचारणीयं न जातु जात्यन्तरसंश्रयेण ।
दुर्वर्णनिर्वर्णविधौ बुधानां सुवर्णवर्णस्य मुधाऽनुबन्धः ॥ ३७ ॥
गुणेषु ये दोषमनीषयाऽन्धा दोषान् गुणीकर्तुमथेशते वा ।
श्रोतुं कवीनां वचनं न तेऽर्हाः सरस्वतीद्रोहिषु कोऽधिकारः? ॥ ३८ ॥
अयं कविर्नैष कविः किमत्र हेतुप्रयुक्तिः कृतिभिर्विधेया ।
श्रोत्रं मनश्चाऽत्र यतः समर्थं वागर्थयो रूपनिरूपणाय ॥ ३९ ॥
कवितायै नमस्तस्यै यद्रसोल्लासिताशयाः ।
कुर्वन्ति कवयः कीर्तिलतां लोकान्तसंश्रयाम् ॥ ४० ॥
निद्रां विदूरयसि शास्त्ररसं रुणत्सि
सर्वेन्द्रियार्थमसमर्थविधिं विधत्से ।
चेतश्च विभ्रमयसे कविते ! पिशाचि !
लोकस्तथापि सुकृती त्वदनुग्रहेण ॥ ४१ ॥

वृत्तमतिविस्तरेण ।

## कथाप्रारम्भः ।

२ अस्ति खल्विहैव सकलाश्चर्यैकपात्रे भरतक्षेत्रे चतुर्वर्गमार्गणोपकरणप्रसूतः समस्तप्रशस्तमहीवलयालङ्करणभूतः सुरलोकमनोरथाविधेयो यौधेयो नाम धाम सम्पदो जनपदः ।

## ग्रामवर्णनम् ।

३ यत्र महानृपतय इव गोमण्डलवन्तः, चक्रवर्तिश्रिय इव महिषीसमाकुलाः, भरतप्रयोगा इव सगन्धर्वाः, सुगतागमा इवाऽविकल्पप्रधानाः, कामिनीनितम्बा इव करभोरवः, श्रुतय इवाऽजस्रज्ञानितविस्ताराः, श्रमणा इव जातरूपधारिणः, बृहस्पतिनीतय इवाऽदैवमातृकाः, भागवता इव प्रतिपक्षकृष्णभूमयः, सांख्या इव समाश्रितप्रकृतयः, हरमौलय इव सुलभजलाः, सङ्कर्षणरणा इव हलबहुलाः, मङ्गपादा इव प्रपञ्चितारामाः, महायोगिन इव क्षेत्रज्ञप्रतिष्ठाः,

१ 'गग'

सलिलनिधय इव विद्रुमच्छायोपशल्याः, स्वर्गवसतय इवाऽतिथिप्रार्थनमनोरथाः, गगनमार्गा इव नक्षत्रद्विजराजिनः, कलत्रकुचकुम्भा इव भर्तृकरसम्बाधसहाः, सुरेश्वरसेना इव स्वाम्यनुरक्ता, सौराज्यदिवसा इव निष्कण्टकमहीभागा, वियदापगाप्रवाहा इव विगतोपलसीमानः, सकलजगन्निर्माणप्रदेशा इव सर्वजीविनः, सुहृद इव च परस्परप्रेमाभिजात्याः कुक्कुटसम्पात्याः सन्ति ग्रामाः ।

४ अपि च विकचकर्णोत्पलस्पर्धितरलेक्षणाः, केलितालपर्णकनकमयकङ्कणाः, सरसनखराजिविच्छुरितभुजमण्डलाः, काञ्चिकोलाहलदर्शितोरुस्थलाः, स्वैरसंजल्पनस्मेरबिम्बाधराः, कर्णकण्डूमिषोद्दलितकक्षान्तराः, पृथुनितम्बवशालसललितहंसगतिविभ्रमाः, सहजशृङ्गाररसभावितसुरतविभ्रमाः, पीनकुचकुम्भदर्पत्रुटत्कञ्चुकाः, शालिवप्रेषु यान्त्य क्षणं गोपिकाः पान्थसार्थेषु नयनोत्सवं कुर्वते यत्र तापं पुनश्चिरमुपचिन्वते ।

## यौधेयदेशवर्णनम् ।

५ स यौधेय इति ख्यातो देशः क्षेत्रेऽस्ति भारते ।
देवश्रीस्पर्धया स्वर्गः स्रष्ट्रा सृष्ट इवाऽपरः ॥ ४२ ॥
वप्रक्षेत्रसञ्जातसस्यसम्पत्तिबन्धुराः ।
चिन्तामणिसमारम्भाः सन्ति यत्र वसुन्धराः ॥ ४३ ॥
लवने यत्र नोप्तस्य लूनस्य न विगाहने ।
विगाढस्य च धान्यस्य नाऽलं संग्रहणे प्रजाः ॥ ४४ ॥
दानेन वित्तानि, धनेन यौवनं, यशोभिरायूंषि, गृहाणि चाऽर्थिभिः ।
भजन्ति साफल्यमिमानि देहिनां न यत्र वर्णाश्रमधर्मवृत्तयः ॥ ४५ ॥

## राजपुरनगरवर्णनम् ।

६ तत्र तद्विलासिनीविलासलालसमानसानाममरकुमारकाणामनारम्भे नभस्यवतरणमार्गचिह्नोचितरश्मिभिः, उपहसितशिशिरगिरि-हराचल-शिखरैः, भटनिकटनिविष्टविकटस्फटोत्कटकरटिरिपुसमीपसञ्चारचकितचन्द्रमृगविलोचनरचितवि-कचकुवलयोपहारिभिः, अम्बरचरतुरगचरणक्षुण्णक्षणमात्रविश्रमैः, अम्बरचरचमू-विमानगतिविघ्नसंनिधायिभिः, अनवरतविहरद्विद्याधरवधूजनस्मरान्तकामिनीकपोल-श्रमस्वेदापनोदमन्दस्पन्दपताकाञ्चलपल्लवैः, रचितपरार्ध्यविन्ध्याङ्गनाभरणाननतनि-ष्पकपर्णीपवनिकायकृतवेणुगानकुतूहलितलक्षितसिद्धयुवतिभिः, अतिम-विषमशरासुरसुन्दरीकरचापलविलुप्तकेतुशाटीचयैः, अनेकध्वजतन्तुभ्रमाभिषेको-

स्तम्भितमणिमुकुरमुखावलोकनकेलिवलद्दिवौकःस्खलितरयविमानवाहनसम्बाधानुबन्धिभिः, अमलरत्नचयनिचितकाञ्चनकलशविसरदविरलकिरणजालजनितान्तरिक्षलक्ष्मीनिवासविचित्रमिव योल्लोचैः, अमृतकरातपस्पर्शद्रवच्चन्द्रकान्तमयप्रणालोच्छलज्जलजालकासारसिच्यमानविषद्विहारिणीविरहवैश्वानरकर्ममर्मरशरीरयष्टिभिः, अहिमधामरश्मिसम्पुक्षितादिनकृत्कान्तकिम्पिरिपर्यन्तस्फुरत्कृशानुकणविकासमानामरमुनिमध्याह्नदीपैः, अमलकमलासारविलसत्कलहंसश्रेणिद्विगुणदुकूलांशुकवैजयन्तीसन्ततिभिः, उपरितनतलचलत्प्रचलाकिबालकभयपलायमानजयविजयपुरपवनाशनैः, उपान्तस्तूपनिपतत्पारापतपतत्रपङ्क्तिपुनरुक्तधूपधूमाडम्बरैः, अतिनिकटविटङ्कोपविष्ट-शुकशावसन्दिह्यमानहरितारुणमणिभिः, इतस्ततोऽतिदूरतरचरच्चापच्छदगूर्च्छदतुच्छच्छायाच्छाद्यमानमेचकरचनैः, अनिल-लय-प्रेङ्खोलन-क्वण-क्वणत्किङ्किणीजालवाचालपालिध्वजध्यानारब्धविद्याधरवधूद्वेलितविधिभिः अनवधिसुधाप्रधावद्धामसन्दिग्धस्वर्धुनीप्रवाहैः, प्रफुल्लप्रसवैरिवान्तरिक्षवृक्षस्य, श्वेतद्वीपदृष्टिभिरिव रोदःकोटरस्य, शिखण्डमण्डनपुण्डरीकाननैरिव नभोदेवतायाः, पुण्यपुञ्जोपार्जनक्षेत्रैरिव त्रिभुवनभव्यजनस्य, डिण्डीरपिण्डमण्डलैरिव विहायःपारावारस्य, अट्टहासविलासैरिव व्योमव्योमकेशस्य, स्फटिकोत्कीर्णक्रीडाकुम्भैरिव ज्योतिर्लोकस्य, ऐरावतकुलकलभैरिवानन्तवनस्य, समन्तादुत्सर्पताऽनेकमणिरश्मिरचितरङ्गप्रसरेण परिकल्पयद्भिरिव विनेयजनानां त्रिदशवेश्मनिवेशारोहणाय सोपानपरम्पराम्, अशेषस्य जगतः परलोकावलोकनोचितभावसम्भारसारस्य संसारसागरोत्तरणपोतपात्रैरिव, विचित्रकोटिभिः कूटघटनाश्चर्यां श्रियमुद्वहद्भिर्धवलालयपरम्पराभ्रलिहस्तुङ्गतोरणमणिमरीचिपिञ्जरितामरभवनैर्महाभागभवनैरुपशोभितं राजपुरं नाम नगरम्[1]

७ आदाय सर्वसारं विधिना दर्शयितुमस्य लोकस्य ।
अमरपुरीलक्ष्मीमिव मन्ये सृष्टं प्रयत्नेन ॥ ४६ ॥
यत्र यमोऽप्यसमर्थः प्रभवेत् कुत एव तत्र रिपुलोकः ।
धूलिस्पर्शभयादिव मन्ये प्राकारनिर्माणम् ॥ ४७ ॥
परिखावलयालङ्कृतमाभाति समन्ततः पुरं रम्यम् ।
आयसनिगडनिबद्धं सुरहरणभयादिव जनेन ॥ ४८ ॥

किञ्च ।

सौधमूर्धसु यत्रोच्चैः कुम्भाः काञ्चनकल्पिताः ।
भान्ति सिद्धवधूदत्ताः शेषाः सिद्धार्थका इव ॥ ४९ ॥

---

१ 'सोत्तानकुल्कर्णेत्तिनिशीरः' मूल २ 'पुरःसरपर' मूल.

(३) विनात्रयनस्य

ब्रह्मा विलासिनीर्यत्र विनिर्माय न यौवने ।
मनोविभ्रमभीत्येव व्यधाल्लोचनगोचरा ॥ ७० ॥
यत्र स्मरस्मयध्वासियुवलोकविलोकनात् ।
यभार सर्वदा लक्ष्मीं पुराणपुरुषो हृदि ॥ ७१ ॥
यत्कान्तकामिनीसङ्गभयादिव नगात्मजा ।
विवेश हरदेहार्धं तद्रक्षणपरायणा ॥ ७२ ॥

८ यत्र चाऽनवरतप्रसाधितालकचामरोपचारैः, अलिकाङ्गणरङ्गश्रृङ्गारितभूलताकोटिभिः, उपसर्पितविलासनिकासाविरलविलोकविलोचनलीलाकमलैः, सङ्कल्पितकपोललावण्यमधुसमागमैः, निष्कारितामृतकान्तबिम्बाधररसैः, मज्जनितस्मरमारालापकर्णपूरैः, उदारहारनिर्झरोचितकुचक्रीडाचलविहारसम्पादिभिः, स्तनमुकुलमृणाललीलावलिवाहिनीविहितनलकेलिविभ्रमैः, प्रदर्शितमनोहसावामनाभीवलभिगर्भैः, प्रकटितचेतोजन्मनिवासशासनमर्यादालिखितलिपिस्पर्धमानरोमराजिभिः, विस्तारितसमस्तसुरतसाम्राज्यचिह्नघनसिंहासनैः, सञ्चारितोरुकदलीकाण्डकाननैः, चरणनखसम्पादितरतिरहस्यरत्नदीपविरचनैः, पौराङ्गनाजनैर्विनोद्यमान इव मनसिजः महाराजनन्दनो निजाराधनपरमेष्वपि युग्मवदिवसेषु न परपुरपुरन्ध्रीणामर्हणासु परिचयं चकार ।

## मारिदत्तमहाराजस्य दिवसव्यापारवर्णनम् ।

९ तत्र (चाऽस्मिन्) समस्तमहीमहिलालीलागण्डमण्डनकरे पुरे सुकृतिनो हरिवंशजन्मनः प्रचण्डदोर्दण्डमण्डलीमण्डनमण्डलाग्रखण्डिताराति‌प्रकाण्डस्य चण्डमहासेनस्य नृपतेः सूनुः पराक्रमापहसितनृग-नल-नहुष-भरत भगीरथ भगदत्तो मारि(र)दत्तो नाम राजा ।

१० स बालकाल एव लब्धलक्ष्मीसमागमः, कल्पवृद्धानां च प्रतिपन्नपितृवन तपोवनान्तरस्यादनभ्यस्तविद्यावृद्धगुरुकुलोपासनः, समानशीलव्यसनचरित्रैर्नर्मसचिवपुत्रैः परिवृतः, समाविर्भवता च तार्तीयीकेन वयसा निरङ्कुशतां नीयमानः, कदाचित् स्वयंपरिगृहीतवीरपरिकरविधिः, उभयकटकन्दराम्भोम्भाभिमुखानिलीनमदवीर्यधर्मविभेदिमिदण्डानुकारिणा दानद्रवेण श्यामलितकपोलभित्तिभिः, मदमदिरामदस्वादोन्मदमधुकराराववधुनरवडिण्डिमाडम्बरैः, क्रोधानलज्वालाकरालालापपतापरितमकलदिक्पालमाध्यमैः, मनूत्सारथिरयोन्मायमियोदलमहमनिष्ठुरनिष्ठुरत्व

१ 'लावण्य' मू० २ 'निर्निमान' मू० ३ 'मदिरामण्डल'
४ 'नाम्ना नाडमरा' मू० ५ 'मिरा' मू

मधुपाथ प्रवाहप्लावितसुरसदनै, करात्क्षेपभयभ्रस्यदाशाकरटिघटै, प्रधावजवकम्पितधरणिदेवतै, चरणन्यासनमद्भूगोलक-(भार)-दलितशेषफणावल्यै, प्रत्यपुर.पक्षभ्रमिप्रारम्भविजृम्भितप्रभञ्जननमितकुलशैलशिखरविघटनै, कटकण्डूयनविनोदभग्नमहामहीरुहनिवहै, समन्तसत्त्वसमर्दोत्तुच्छोच्छलच्छोणितच्छटाविच्छिन्नोपहारसन्तर्पितमदपुरुषै, मन सु स्वतसहारसमर्थैरिव, दृष्टिषु कृतकालाग्निरुद्रैरिव, दशनेषु विनिवेशितविशसनकर्मभिरिव, करेषु निहितवधस्थियोपायैरिव, पादेषु सम्पादितवज्रसम्पातैरिव, वालधिषु च नियुक्तयमदण्डैरिव, निजमदगन्धानुबन्धबाधितापरद्विरदमदप्रभेदै., स्यन्दनवेदमुपतिष्ठमानै, नरशिरोदर्शे प्रधावद्भि, तुरगालोक पुर प्रतिभासमानै, सपत्नद्विपमदगन्धाघ्राय मधुस्यद्भिः, प्रतिपक्षे भ्रमणिरवश्राव सरम्भमाणै, क्रमेलकविषय विनिरुन्धद्भि, छत्रगोचर परिलुम्पमानै, प्रलयकालानिलचलिताचलकुलरिभीषणै, प्रतिकरिशङ्कयेव गिरिकलीलालुलितमहाशिलाशकलनिष्पिष्टगण्डशैलै, वरनिष्पेषणपातितसालवनै, दन्तकोटिसमुत्पाटितपुरकपाटै, स्वकीयबलविजिज्ञापयिषयेव रविरथेपाडम्बर रदेषु, शेष पुष्करेषु, मन्दराचल शरीरेषु, महापगा कोशकटस्रोत सु, सूर्यं लोचनेषु, तारागण बिन्दुषु, चन्द्र नखेषु, पवन च तर सु दधानै, विटपिभङ्गवदवधीरिताधोरणप्रणिधिभि, विमतन्तुवधूत्तिवल्लिकै, वीरिणप्ररोहवत्पर्यन्तवाहरिकै, लताप्रतानवदुन्मथितबन्धनै, नलदण्डवत्समर्दितालानस्तम्भै, मृणालजालवद्विघटितार्गलै, कुमुदकाण्डवदुन्मूलितनिवाचै (वै), मुखपट्टाभोगवदवगणितकरेणुभि, परमाणुवल्लोचनगोचरादपि दूरतरसञ्चारिै, कर्णतालपवनपरिक्षिप्तदिगन्तघनसङ्घै, गगनाघ्राणो त्क्षिप्तकरसूत्कारकम्पितग्रहलोकै, प्रांशुप्रमाथोन्मथितमार्तण्डमण्डलै, पङ्कोपदेहदुर्दिनीकृतनभोभागै, जलावगाहपलायितजलदवृन्दै, कामचारविहारवित्रासितवनदेवीसन्दोहै, उल्लङ्घितबलवेगवीर्यपरिमाणै, शास्त्रशासनप्रमाणैरिव सकलजगच्छून्यतामानेतु प्रवृत्तिमहद्भि सामन्तै सह चिक्रीड।

११ कदाचित्कोणकोटिकल्पवन्दुवाम्बरचारणापरिस्खलितदिग्देवताविमानमण्डलः पुष्टाश्वै सह प्रीति बबन्ध। कदाचिन्निजभुजपराक्रमव्यायोधितार्मल्लजलव्यालो महाम्बरसीनामर्णासि विजगाहे। कदाचिद्दोर्दण्डदलितदुर्दमशार्दूल- कुक्षीकृहरा प्रायितघूकघूत्कारघोरास्वरण्यानीषु विजहार। कदाचिन्नियुद्धायामितप्रबलवेताल. दूरनाकरोड्डमरडमरुकारवभैरवा. क्षपासु पितृवनावनी. सञ्चचार। कदाचिदसहायसाहस साश्चर्यशौर्यनिर्जितनिजतदुर्वारवीरावतारभूपालचूडामणिमरीचिप्रसरसरम्भा

---

१ 'विघटितार्गलै' मू २ 'कन्दुकान्तर' मू ३ दुग्धे, ४ अमरान्.

पल्लवितचरणकमल　शत्रुक्षत्रियकलत्रनत्रापाङ्गभङ्गोल्लोलल्लनाञ्जलिपातानामामान पात्रता निनाय । कदाचित्तौर्यत्रिकातिशयविशदविनिर्जितगन्धर्वलोक सैलतिकलता स्फरङ्गेषु घनदवताना समान नर्तयामास । कदाचिदान्ध्रीणामलकवल्लरीविजृम्भण जलधर , चोलीषु भ्रूलतानर्तनमलयानिल , केरलीनां नयनदीर्घिकाकेलिकलहंस , सिंहलीषु मुखकमलमकरन्दपानमधुकर , कर्णाटीना कुचकलशविलासपल्लव सौराष्ट्रीषु वलिवाहिनीविनोदकुञ्जर , कम्बोजीना नाभिवल्मीकगर्भसम्भोगभुजङ्ग , पल्लवीषु नितम्बस्थलीखेलनकरङ्ग , कलिङ्गीना चन्दनकिसलयाभवपुष्पाकर (स्म) स्मर विडम्बयामास ।

१२ कदाचिदुत्फुल्लारविन्दमकरन्दबिन्दुकल्लोलनलकेलिवापिकेषु, माकन्द मञ्जरीजालालोकनोल्लासितविलासिमानसेषु, मलयाचलवनीवनप्रसूनसौरभोद्भ्रमर मरुदुद्धूयमानमकरध्वजध्वजदुकूलेषु, कामिनीमुखमदिरोन्मादितबकुलकाननेषु, विलासिनीविलोकितामृतसन्तर्प्यमाणकुरबकतरुषु, रमणीमणिमञ्जीरशिञ्जितमुख रचरणास्फालनसनाथाशोकशाखिषु परिमलमिलन्मिलिन्दसन्दोहदूषितषट्पदाति थिपादपेषु, कदम्बकुसुमधूलिधूसरधरापृष्ठेषु, कन्दरकलापसञ्चरद्गतिचतुरविकिरनख मुखावलिख्यमानवल्लरीशरीरेषु, का तारकुहरविहरत्कोकिलकुलकोलाहलोत्थापितान ङ्गव्यालव्याकुलितकामुकेषु, प्रोषितयोषिद्विरहातुरक्षणिमनस्तुक्षिषु, मनसिजाजरवट- द्वारङ्कपदध्वस्यहृदयेषु, दिवाऽप्यभिसारिकाजनानामन्धतमसप्रसाधिषु धीराणामपि प्रणयिनीप्रणतिहेतुषु, मानिनामपि प्रियतमाप्रसादनदैन्यनिर्वेदिषु, शूराणामपि वल्लभाचाटुकारकारणेषु, यमिनामपि रतिरसातङ्कायतनेषु, पुष्पशापशरप्रसारसारेषु, मधुमासवासरेषु कामाश्रमधर्मचारितामाप्रपेदे ।

१३ कदाचिच्चरणकिसलयोल्लासमसृणितमार्गनिर्गमाभिः , पादनखमयूखोप हारितविहारमहीमण्डलाभिः , गोत्रनाकनाकलितोरुस्तम्भिकापुनरुक्तकाननदेवता स्थानतोरणमालाभिः , नितम्बस्थलीद्विगुणितशोकशाखाशयनसन्निवेशाभिः , तनूरु हराजिविनिर्जितलताप्ररोहप्रसराभिः , नाभिगर्भनिर्भर्त्सितक्रीडाकर्कोलकन्दराभिः , वलिविलासविलुप्तवल्लरीचरणाभिः , स्तनविस्तारविडम्बितप्रसूनस्तबकाभिः , भुजपञ्जरपराजितकान्तारलताभिः , अधराधरीकृतबालप्रवालाभिः , कपोलतला लम्बिस्वेदसलिलमञ्जरीनालकमुपिनावतंसपल्लवाभिः , चिकुरकान्तिकलुषितसमस्तच्छद- च्छायाभिः , अलङ्कारीकृतवनस्पतिविभूतिभिर्युवतिभिः सह प्रमदवनेषु रेमे ।

---

१ स्खलितकम्बेलनलताप्र मू २ विजृम्भमाण ३ विलासिनी ४ "निस्तेज' मू॰ ५ 'नाभिगर्तनिर्भर्त्सित' सर्वटीकायाम्

१४ कदाचिन्मरकतमणिविनिर्मितमूलासु, कर्केतकोपलसंपादितभित्तिभङ्गिकासु, काञ्चनोपरचितसोपानपरम्परासु, मुक्ताफलपुलिनपेशलपर्यन्तासु, करिमकरमुखमुच्यमानवारिभरिताभोगासु, कर्पूरपारीदन्तुरतरङ्गसङ्गमासु, दुग्धोदधिवेलास्विव चन्दनधवलासु, वनस्थलीष्विव सकमलासु, शिशिरशैलशिलास्विव मृगमदामोदमेदुरमध्यासु, कण्ठीरवकण्ठपीठेष्विव सकेसरासु, विरहिणीशरीरयष्टिष्विव मृणालवलयिनीषु, मन्त्रवादोक्तिष्विव विविधयन्त्रश्लाघिनीषु, वसन्तलतास्विव विचित्रपल्लवप्रसूनफलस्फारा [ रम्या ] दीर्घिकासु गृहदीर्घिकासु करेणुभिः करीव कामिनीभिः परिवृतो जलक्रीडासुखमन्वभूत् ॥

१५ अन्तर्लीनसत्त्वः शर्वरीवासर इव रजस्समोद्दल्लोऽपि, चण्डानिल इव व्यसनेषु यद्वृच्छीलिरपि, वनगज इव कामचारप्रवर्तनोऽपि, धनुग्रह इवारागिनमन्त्रिलोकोऽपि, रविरिव कुवलयानवेक्षणोऽपि, वसन्त इव विजालानन्दनोऽपि, हुमार्दन इव विदृतिकमलोत्सरोऽपि, पारिपुत्र इवानात्मनीनवृत्तिरपि, कमलीव दोपागमरुचिरपि, कांदिशीक इवानवस्थितनिश्चयोऽपि, प्रतिपच्चन्द्र इव दुर्दर्शोऽपि, चक्रवाक इव वारवनिताप्रियोऽपि, रथचरणनाभिदेश इवाक्षासक्तोऽपि, शूर्पकारातिरिव मधुलब्धविजृम्भणोऽपि, जलव्याल इवाच्छोदनाभिरतोऽपि, विगतविपद्वाक्षमीममागम स्वस्य दैवायत्तायत्तामिव कल्याणपरम्परामाचचक्षे ॥

१६ एवं तस्य धरोद्धारकुलशिखरिण करिण इव स्वच्छन्दाचारपरागकलुषिता निजवंशलक्ष्मीमुपयच्छमानस्य, क्षणमिन्द्रियाणामानन्दजननीमसुखवृत्ति वीरकलावतारामिवात्मनि सकलयत, परत्रेह च परिणामदारुणं मृगया दिव्यसनमेव खलु क्षत्रपुत्राणां कुलधर्म इति मन्यमानस्य, मरुषु पथिकस्येव मनोविभ्रमहेतुषु कथास्वतितृष्यतः, परिपाकगुणकारिणीं क्रियामकल्पस्येव परोपरोधाद्दुपयुञ्जानस्य, सत्पुरुषगोष्ठीं विषादायनिष्टतरां परिगणयतः, चेतोविजृम्भणकरमनुचरं चतुरप्याप्ततरमपेक्षमाणस्य, वितथस्तुतिमुखरेषु चिन्तामणिरिव फलत., सकलजनसाधारणेऽपि स्वदेहे त्रिकमदीक्षितस्येव देवभूयेनाभिमिविशमानस्य, निजाजीवनपरैरपायेषु नीयमानस्याप्यरण्यवारणस्येवाचेतत , खलालापानिलगलितहितोपदेशायतनस्य, चन्दनतरोरिव दुर्जनाहिव्यूहितस्याद्दूरतरोत्सरत्व व्यालवहुलोकस्य कलिविलसिंतस्फुरत्स्वाविकरस्युः ॥

## देवतायै बलिहेतवे राज्ञो मनुष्यमिथुनाय किङ्करानादेशः ।

१७ स पुनरेकदा नृपतिरात्मराजधान्यामेव चण्डमारिदेवताया पुरतः सकलसत्त्वोपसंहारात् स्वयं च सकललक्षणोपपन्नमनुष्यमिथुनवधाद्दिव्याभरलोक-

विजयिन करवालस्य सिद्धिर्भवतीति वीरभैरवनामकात्कुलाचार्यकादुपश्रुत्य खेचरीलोकलोचनावलोकमकुतूहलितचेतास्तथैव प्रतिपन्नतदाराधनविधि, अकालमहानवमीमहमिपसमाहूतसमस्तसामन्तामात्यजानपद, प्रलयकालक्षुभितसप्तार्णवरवघोरानकस्वानाविर्भावितभुवनान्तरसचरद्देवतामद, ससरम्भमम्बरतलादिलाया पातालमूलाद्दिगन्तरालेभ्यश्च विभावर्या तम सततिभिरिवाविर्भवन्तीभि, गतिवेगविगलज्जटाजालाक्षिप्यमाणमहाग्रहग्राहक्षोभरपितगगनगामिलोकाभि, परस्परमघट्टस्फुटत्खट्वाङ्गकोटिघटितघण्टाटङ्कृताकर्णनावतीर्णनटत्कारदजनितवैलक्ष्याभि, कपर्दनिर्दयसमर्दनिर्मोदालगर्दगलगुहास्फुरत्फूत्कारस्फारितललाटलोचनानलज्वालाल– पिनाकिकिमितिसुतनिकेतनपताकाभोगाभि, शिखण्डमण्डनाङ्गुमरनरशिर श्रोणिपर्यन्तभ्रान्तप्रवृद्धगृद्धनिरुद्धप्रभग्नदीधितिप्रबन्धाभि, श्रवणभूषणभुजङ्गजिह्वालिह्यमानकपोलतलनिलिगितरक्तपत्राभि, इतरेतरस्खलनमत्सराविर्भूतोद्भटभ्रकुटिर्भीषणमुखमुक्तस्फीतफेत्कारभयपलायमानहिमकरहरिणपरित्राणोत्तालितमक्षत्रनिकराभि, वियद्विहाराश्रयश्रमप्रसारितासरालरसनापसारितसुरापगापय स्पर्शप्रकोपितसहार्विभि, अतिबाढप्ररूढदंष्ट्राङ्कुराग्रलग्नघनसघातनिर्जितवराहवेपविष्णुसमुद्धृतधराशोभाभि, सनादरोद - श्रोडक्रीडत्कमाक्रान्तिमुखरघर्घरकघोरघोषभीषितानिमिषपरिषद्धि, दिवाऽपि कीकसोत्कटकोटीरकीर्णकशावकाशतया तारकितमिव व्योमनिर्मापयन्तीभि, सकलस्य जगत क्षयक्षपाभिरिवातिदारुणदीर्घदेहाभिर्महायोगिनीभिरापूर्यमाणपरिसर, [अपि च] क्वचिन्नृत्यदुत्तरलतालवैतालकुलविडम्ब्यमानडाकिनीताण्डवाडम्बर, क्वचिद्भ्रूभङ्गाभीलभूतनिर्भर्त्सितकपिशपाचरभरभज्यमानाम्यर्णभूरह, क्वचित्करोड्डमरडमरुकरवल्यखेलत्कपालिनीत्रिशूलवरगननिर्भिन्नद्रवदुत्तसचन्द्रामृतपानपरचकोर – कामिनीकर्बुरीक्रियमाणककुभाभोग, क्वचिदुन्माथप्रमाथसार्थकदर्थ्यमानविधुरार्पितजरूथमन्थरकपालशकल, क्वचित्प्रभुक्षितक्षुद्रक्षुण्णाकाङ्क्षध्वाङ्क्षराक्षमक्षिप्यमाणयक्षरक्षितक्षेत्रनिक्षिप्तवनदेवतापोत, [क्वचित्तरक्षुरक्षोदरावदार्यमाणपुराणास्थिप्रस्थ,] क्वचित्कौशिकपलाशतुण्डखण्ड्यमानावानाजिनवैजयन्तीक, क्वचिच्छार्दूलदानवदनविदूयमानचिरच्छिन्नच्छगलगलनालजटिलतोरणमाल, क्वचित्कासरासुरखुरप्रचारचूर्ण्यमानकरङ्कप्राकार, क्वचित्करिरूपकोणपकरालकरविकीर्यमाणजीर्णचर्मविनिर्मितवितान, क्वचित्पुरदशकनिशाचरनखरशिखोल्लिख्यमानादयानशोणितदत्तभित्तिपत्राङ्कुल, क्वचिदरवर्वगर्वोर्द्धर्णगामायुनैगमे (कपे) यजुष्यमाणपानपात्रासवनिपकर्पर, क्वचित्साधककलोकानिजशिरोदह्यमानगुग्गुलरस, क्वचित्तरघ्यालप्रबोधितस्वीयशिरावलिप्रदीप, क्वचिन्महामांसिकामरभिरधारापानप्रसाद्यमानरुद्र, क्वचिन्महावनिक्वीरत्रयविक्रीयमाणस्वपुर्लब्धचन्दर, क्वचित्तीक्ष्णपुष्पा

पक्कष्टस्वकीयान्त्रयन्त्रदोलनतोष्यमाणमातृमण्डलं, क्वचित्परपमनीषमनुष्यास्मीयितरसाहुतिहूयमानसप्तजिह्वं, यमस्याऽपि कृतशङ्कातङ्कं, महाकालस्याऽपि विहितसाध्वसोद्रेकं, समस्तसत्त्वसंहारायतनं देवतायतनमुपगम्योपविश्य च तत्पादपीठोपकण्ठे कीनाशनगरमार्गानुकारिणा करार्पितेन तरवारिणा प्रकम्पितसुरासुरलोकस्तन्मिथुनाय दण्डपाशिकभटानादिदेश ॥

## अथ सुदत्ताचार्यस्य सद्गुणानां प्रस्तावः ।

१८ अत्रान्तरे भगवानमरचूडामणिमयूखशेखरितचरणनखशिखोल्लेख्यपरिधिः, सुदत्तापरनामनिधिः, अनाश्वान्, आश्चर्यपर्यायाचा(च)र्यचानुयोगद्भूतभावनाप्रभावप्रकम्पितायातविनतवनदेवतोत्तप्रसूनमकरन्दस्यन्ददुर्दिनीकृतक्रमः, सकलसिद्धान्तसमर्थतीर्थप्रार्थनपदार्थसार्थसमर्थनातिशयविशेषसाक्षाद्भवसरस्वतीकरक्रीडाकमलकल्पितसपर्यः, चतुरुदधिरोधःसविधवनविनिषण्णकिंनरीवदनविरोचनविकासमानयशःकुशेशयावतंसितजलदेवतासमाजः, समस्तसमयान्तरविद्याविदग्धबुधप्रकाण्डपुण्डरीकमण्डलीमार्तण्डः, कृत्स्नदिगन्तविश्रान्तविश्रुतशिष्यश्रेणिसमीरपथप्रथमानकीर्तिकलहंसीनिवासीकृतनिखिलभुवनाभोगः, शुद्धाभिसंधिसमाधिनिधुविशेषोन्मेषनिर्विषीकृतविषाविषमदोषकलुषविषयविषधरः, प्रसंख्यानपविपातकलुषानुत्थानमन्मथमदद्रावितरद्भ्रमरविजयः, अरजस्तमोबहुलोऽप्याततगुणधर्मधरः, अकिंचनोऽपि रत्नत्रयनिवासः, अविभूषणोऽपि सुवर्णालंकारः, अविषमलोचनोऽपि संपन्नोमासमागमः, अकृष्णोऽपि सुदर्शनविराजितः, असन्नस्पृहोऽपि जातरूपप्रियः, अशुद्धनयनीतिरपि महाभागचरितः, कठिनवृत्तिरपि[1] क्षमास्वभावः, अव्यालहृदयोऽपि नियमितकरणग्रामः, उदयाचलस्तपस्तपनस्य, कौमुदीचन्द्रः करुणामृतनिश्च्योतस्य, मानसप्रदेशः सरस्वतीवाललायाः, प्रभवपर्वतः प्रशममन्दाकिनीप्रवाहस्य, उत्पत्तिक्षेत्रं सौजन्यबीजस्य, उदाहरणं गम्भीरतायाः, निदर्शनमौदार्यस्य, प्रसूतिस्थानं महिम्नः, प्रत्यादेशोऽभिध्यायाः, निधिर्धैर्यस्य, आकरावनिश्च सर्वगुणमणीनाम् ।

## हेमन्त–दिन–वर्णनम् ।

१९, यस्य च सकलसत्त्वसंचरणसंकोचिनि, शिशिरकणमञ्जरीजालजयविजृम्भमाणानिलकुले, सकलजगत्खण्डव्यथावेपथुस्फारिणि, विरमरमदवशदेशकदशनवीणे, बिलमूलकोटरकुट्टिमकुञ्चिताजगदर्पपरिषदि, हिमपृषतपलिताङ्कुरितकुटहारिकाकुन्तलकलापे, मृगयूथरोमन्थसामर्थ्यकदर्थिनि, प्रालेयलवमुक्ताफलितकरटिरिपुरोमभागे, मजपालविलासिनीकपोलविधुवैशद्यशातिनि, हलाजीवजायापद-

१ ' अकठिनवृत्तिरपि '

पक्ष्मलावण्यलोपिनि, वनेचरवनिताधरदलकान्तिकर्शिनि, मुनिकामिनीकरकिसलयकृततरङ्गसङ्गे, द्विजकण्ठकुण्ठताविधायिनि, विप्रलब्धपुरन्ध्रीस्तनभारजनितजानुसम्बाधे, कुचकुहरोपसर्पणरतपोतखेदितबालवतीचेतसि, विदूरितरम्भोरूभूषणाभिलाषे, सहसुसमिथुनघनालिङ्गनादेशिनि, निरन्तरमुल्लसन्तीभिः करतलपरामर्शसुखविलोपनसूचीभिरिव तनूरुहराजिभिः कण्टकितानि कुर्वति शबरसहचरीवक्षोजमण्डलानि, शिथिलयति दुर्विधकुटुम्बेषु जरत्कन्थापटच्चराणि, नर्तयति पथिकेषु पाणिपल्लवानि, विरचयति दयितोदवसितमनुसरन्तीनामभिसारिकाणामरालपक्ष्माग्रलग्नस्तुषारासारशीकरैर्लुलितशौक्तिकेयशुक्तिपुटस्पर्धीनि विलोचनानि, संतानयति तापसीनामूरुपर्यन्तपाटलपटलकारिषु बृहद्भानुषु स्पृहयालुतां, ध्वानयति पवर्णलयमनोहराणि गर्भरूपलपनेषु परहवाद्यानि, मन्दयति चण्डरोचिषोऽपि तेजःस्फुरितिमानम् ।

२० अपि च यत्राऽतिशिशिरभरात्

कान्ते कोककुटुम्बिनी न कुरुते प्रातेऽपि चाटुक्रियां
हंसश्चञ्चुपुटान्तरालविगलज्जम्बालकस्तिष्ठति ।
कृच्छ्रात्कुञ्जरहस्तवर्तितचयः पांसुः पुनः शीर्यते
भर्तृणां शयनं न मुञ्चति परं कोपेऽपि योषिज्जनः ॥ ५३ ॥
सिंहः सन्निहितेऽपि सीदति गजे शीर्यत्क्रमस्पन्दनो
मध्याह्नेऽपि न जातबाष्पकचलः प्रायः कुरङ्गीपतिः ।
वत्सः कुण्ठितकण्ठनालवलनः पातुं न शक्तः स्तनं
वक्त्रं नैति विभातकर्मकरणे पाणिर्द्विजानामपि ॥ ५४ ॥
पत्रैः स्रस्तलप्ररूढविरसप्रायैर्मृगाणां रतिः
क्षोणीधूलनकेलयोऽपि विकिरैस्त्यक्ताः प्रभातागमे ।
कोकः शुष्कमृणालजालचरणन्यासैः प्रियां वीक्षते
चक्रप्रान्तविधूनिते च कमले हंसः पदं न्यस्यति ॥ ५५ ॥
हंसी चञ्चुपुटान्तरार्पितबिसच्छेदात्खरं खिद्यते
भूमिन्यस्तकरा करेणुरवशक्षीरस्तनी ताम्यति ।
प्रातर्डिम्भविचेष्टितुण्डकलनान्नीहारकालागमे
हस्तन्यस्तफलद्रवा च शबरी बाष्पातुरं रोदिति ॥ ५६ ॥
अह्नोऽर्धेऽपि तरङ्गवारि करिणो गृह्णन्ति रोधःस्थिता
जिह्वाग्राद्गलनालमेति न पयः सिंहे सतृष्णेऽपि च ।
एणानामधरान्तरालदलितास्तिष्ठन्ति पाथःकणाः
पूर्वोत्खातविशुष्कपल्वलगतः पोत्री च मुस्ताशनः ॥ ५७ ॥

किं च ।

शून्याः पदैः कररुहां रमणीकपोलाः
  कान्ताधरा न दशनक्षतकान्तिभाजः ।
स्वच्छन्दकेलिषु रता वनिता न यत्र
  काले परं जनितकुङ्कुमपङ्करागे ॥ ५८ ॥

यत्र च

लीलाविलासविरलैर्नयनासिताब्जैः
  स्पर्शासुखाधरदलैर्वदनारविन्दैः ।
रोमाञ्चकण्टकिततैः कुचकुड्मलैश्च
  स्त्रीभिः कृताः सुकृतिनः सुरते सखेदाः ॥ ५९ ॥

२१ तत्राऽनवरतमन्त·प्रवर्धमानध्यानधैर्यधनंजयावधूतहिमसमयप्रत्यूहव्यूह-स्याऽतिनिवातसौधमध्यसमध्यासिन इव स्थण्डिलशायिनो हेमन्ते विहितविरहिजन-दुर्लभविभातसमागमाः सुखेन विभान्ति विभावर्यः ।

## नैदाघ–दिवस–वर्णनम् ।

२२ यस्य च दावदाहद्विगुणितप्रतापातपैस्तपनोपलशैलशिलाशिरोच्छलद-विरलस्फुलिङ्गसङ्गसंतापितस्थलजलचरराजिभिन्नरसूलबिलार्धविनिर्गताशीविषविषध-रवदनोद्गीर्णगाढगरलानलज्वालाकरालप्रकाशप्रसरैर्विरहदहनदह्यमानमहिलाधाम -निलपुनरुक्तोष्णगन्धैरपार्जितजगज्ज्वालज्योतिःसारैरिव कृशानुवकृणगर्भनिर्भरैरिव च करैश्चिरविसर्गसमयसंधुक्षितजठरजातवेदसीव सकलानपि रसान्ग्रसितुमवसिते भगवति गभस्तिमालिनि, परागप्रसरधूसरितसमस्तदिगन्तरालाभिर्वातूलवृत्तिभि र्जगतो जनिताङ्गहारे परिसर्पति समन्तात्कट इव सर्वंकषे मरुति, भुवि दिवि दिशि विदिशि च वैश्वानरसृष्टय इव दृष्टिपथमवतरति विष्वद्रीचि लोके, विनिर्मितमुर्मु-रोपहारास्विव दुःस्पर्शप्रचारासु ,सर्वतः शर्करिलास्थलासु विरोचनचूर्ण-कीर्णेष्विव नखंपचपांसून्माथितातिथिषु पथिषु, वितप्यमानमूषागर्भोदरेष्विव तन्निवासिविलासिलोकपरितापकोपेषु सौधविवरेषु, प्रलयकालपावकपातभीतास्विव पातालमूलनिलीयमानतनुलतासु लेलिहानवनितासु, समाचरितपञ्चाग्निसाधनमान-सानामिव महीधरतापसानां प्रवृद्धमूर्धनिर्ध्यामधूमश्यामलेषु गगनतलेषु, द्रुतदुर्वर्ण-रसरेखाभिरिव मरीचिवीचिभिर्वल्यमानमनोव्याकुलेषु कमलकुलेषु, घोर-घृणिघनघर्माङ्गारासारमृष्टभूगोलस्पर्शप्रकुपितेनोर्ध्वंचलितदृशा दन्दशूकेश्वरेणापाङ्ग-निष्ठ्यूतैः कोपकृशानुभिरिव क्वथ्यमानासु जलदेवतानामावसथसरसीषु, निजनिवास

काननदवोद्दीपिकापिशाचीष्विव दुःसहविदाहदेहसंदोहासु वनदेवीषु, विदूरितवसन्तसमागमास्विव विरहिणीकपोलमर्मरच्छदासु लतावनपङ्क्तिषु, कृतकृष्णवर्त्मकर्मस्विव पत्रपाण्डुषु पादपेषु, स्वकीयकोशकोटरप्रसूतानां कलहंसकुटुम्बिनीनां चिन्ताज्वरकरेषु क्षयामयमन्देष्विव परिम्लायत्सु दैर्घिकेयकान्तारेषु, करेणुकरोत्तम्भितकमलिनीदलातपत्रोपचर्यमाणवारणेषु वनसरःसु, दृढदंष्ट्रोत्पाटितपुटकिनीदरकुहरविहरद्वराहासु कासारवसुंधरासु, कठोराष्ठीलपृष्ठकमठनिर्लोठलुठत्पाठीनक्षोभकलुषवारिषु गिरेयेषु, महानोक्रगहनावगाहदोहदेषु नखायुधेषु, जरति सौरभेयेषु दर्पे, गर्वति गर्वरेषु गर्वे, गलत्स्वापु पुष्पंधयेषु धृतिषु, नार्डिधमेषु नगौकसां नलनालेषु, कथाशेषासु योषितां कामकेलिषु, ज्वलदार्द्रदारुदारुणासु दीर्घाहनिदाघनिर्गलज्जलासु जनिमतां शरीरयष्टिषु, मरुस्थलेष्विव देवखातेषु, प्रभावधरणिष्विव स्रोतस्विनीषु, धान्वनधरारन्ध्रेष्विव प्रधिषु, चुलुकोच्चुलुम्पनोचितेष्विव जलधिषु, संहारसमयदिवसेष्विव प्रशान्तजन्तुसंचारेषु वर्त्मसु च,

२३ येषु च—

'मार्तण्डश्चण्डतापस्तपति मरुभुवामग्निसारत्वं दधानः
　कामं व्योमान्तराणि स्थगयति किमपि द्योति धाचन्पुरस्तात् ।
उच्चैं निर्ध्मामवीचीचयमिव विसृजत्येतदाशान्तराले
　मग्नाङ्गाश्चिन्नगानां पयसि च करिणः क्राथयन्वाति वातः ॥ ६० ॥
मध्याह्नेऽह्नाय वाहाश्चटुलतरखुरास्तोयमार्गं त्यजन्ति
　स्थानायानेतुमीशाः पयसि कृतरतीन्हस्तिनो नैव मिण्ठाः ।
शोषोत्तुण्डः शिखण्डी विमृशति शिशिरान्कन्दरद्रोणिदेशा-
　न्स्वेच्छं कच्छेषु चेमाः कमलदलतलं वारलाः संश्रयन्ति ॥ ६१ ॥
आसीनप्रचलायितैः करिपतिः क्षोणीधरन्ध्रद्रुम-
　स्कन्धालम्बितकन्धरः किमपि च ध्यायन्मुहुस्तिष्ठति ।
निद्रामुद्रितलोचनो हरिरपि ग्रीष्मेषु मध्यंदिनी-
　मद्रिद्रोणिदरादरार्पितवपुर्वेलामतिक्रामति ॥ ६२ ॥

किं च ।

　गण्डस्थलीषु सलिलं न जलाशयाना-
　　मम्भःस्रुतिः कुचतटेषु न शाद्विनीनाम् ।
　नाभीदरेषु वनितासु जलं न वार्यां
　　नीवीलतोल्लसति शुष्यति यत्र लोकः ॥ ६३ ॥
　सुदुर्लभरसोऽप्येष सरसाधरपल्लवः ।
　तत्करोति च तत्रेऽपि चित्रं घर्मसमागमः ॥ ६४ ॥

२४ इति मागधबुधप्रतिबोधितमध्याह्नसंध्ये. मुक्तावन्ध्यैर्विलासिभिर्विलासिनीनां चिकुरलोचनावलोकनामूलहरिणमनोहराः कुचचूचुकप्रभाशष्पश्यामलितपर्यन्तकृत्तय. समध्यास्यन्ते भूरुहवनभूमय , तेषु तपतपनकेतुषु विकर्तनकरमूलविलम्भशिखशिखरिशिर श्रितस्य प्रलम्बितभुजलतायुगलस्य खरमयूखखेदिखेदितमुखमण्डलस्य मनोगोचरातिचारितपश्चर्याश्चर्यितखचरलोकस्य , परिपूर्णममाधिचन्द्रोदयविजृम्भितेन परमानन्दस्यन्दसुधापयोधिना पुनरनन्तरमन्तरपर्याप्तावकाशेनेव घनघर्मजलच्छलेन बहिरुद्वहता परिप्लावितापधनस्य यन्त्रधारागृहमुपागतस्येव यान्ति मध्याह्नसमया ॥

## वर्षादिनवर्णनम् ।

२५ येन च पयोधरोन्नतिजनितजगद्वलयनीलनिचलेषु, निचलसनाथनृपतिचापसर्पादिषु, सपादितखरदण्डगण्डाडम्बरखण्डनेषु खण्डितविलासिनीमनोरथपरिपन्थिषु, परिपन्थिपरिपदुन्माहद्रुहेषु द्रुहिणवाहनक्षितिप्रभेदिषु,प्रभिन्नगजगर्जनोर्जितपर्जन्याविच्छिन्नस्वनदु सहेषु, दु महविरहशिखिमधुक्षणविधायिसु, विहितनिकामकरकासारशार्दूलबलविजृम्भनेषु विशसनावसरमरुत्समीरसूत्कारचण्डेषु, चण्डकरकरालिमविलोपिषु, विलुप्तहिमधामदीधितिप्रसरेषु, प्रसरत्पूरपय पादपनिर्मूलिषु, निर्मूलितजटतटरुहानोकहस्खलितकूलकषवाहिनीप्रवाहेषु, प्रवाहपतद्धारावारिगिरिशिखरशीर्णताप्रसाधिषु, प्रसाधितान्धकारश्यामलाखिलदिगन्तेषु, दिगन्तरधरदरीद्रीर्णजलप्लावितदन्तिपोतेषु, पोतसंभावनाकुलकुरङ्गीजीविताशाविनाशपिशुनतडिद्दण्डसंघट्टेषु,संघट्टमुखरवारिवाहवपुर्मण्डनाखण्डलकोदण्डविलोकनाध्वन्यरत्नरामभ्जिषु, मञ्जिताजकावकामकर्कशदशेषु, दिनमवनिमाशा पातालानि च जलसान्नयत्सु,

२६ यत्र च—

मेघोद्गीर्णपत कठोरकरकासारत्रसत्सिन्धुरे
पूरप्लावितकूलपादपकुलक्षुभ्यत्सरित्पाथसि ।
अम्भश्चण्डसमीरणाश्रयशिवाफेत्कारताम्यन्मृगे
काले सूचिमुखाग्रभेद्यतिमिरप्राय.क्षपासङ्गिनि ॥ ६५ ॥

भूय पय प्लुवनिपातितशैलशृङ्गे पर्जन्यगर्जितवितर्जितसिंहपोते ।
सौदामनीद्युतिकरालितसर्वदिक्के क देशमाश्रयतु डिम्भवती कुरङ्गी ॥६६॥

किं च—

स्त्रीणां कुचोष्मपटलैरजडावतार. संधुक्षित पुनरयं नयनानलेन ।
यत्राऽधरामृतघृताहुतिचण्डितार्चि. संकल्पजन्मविटपी परमुत्प्रकाश ।६७

१ मदङ्ग २ ‘ घराङ्गपु ’ मूल

अपि च—

धाराशरासारभरेण मेघ कोदण्डचण्ड' सह मन्मथेन ।
यालायला सेति च सिन्धुरुद्धश्चिन्ताकुलस्तिष्ठति यत्र पान्थ ॥ ६८ ॥

२७ तत्र वारिवाहवासरेषु तरुमूलनिवासिना निरन्तरयोगोपयोगनिमग्नमनस्कारेण विहितवनदेवतारक्षाधिकारेणेव नीयन्ते निखिलस्य जगतस्तमसखण्डखण्डितनिजशरीरदर्शनवृत्तयोऽभिसारिकाजनमनोऽप्रत्ययपोषणगर्वैर्य शर्वर्य ॥

## भगवत्सुदत्ताचार्यस्य यशोगुणवर्णनम् ।

२८ यस्य च भगवतस्तत्क्षणक्षरत्क्षीरडिण्डीरपिण्डपाण्डुरैरपर्याप्तव्याप्तिभिर्यशोभि संभृतमिदमशेष भुवनमसुलभमस्मदीय सित सर्गदर्शन भविष्यतीति कृताशङ्क इव प्रजापति पुरैव प्रदीपकलिकानिकरपेशलानि शेषफणासु प्रभावन्ति रत्नानि, निरन्तरज्वलज्ज्वालाजालप्रकाशापिशङ्गितकमितकीर्णककुस्सीमन्तिनीसीमन्तपर्यन्तानि क्षीरोदधिमध्येषु वडवानलमण्डलानि, मधुमत्तविलासिनीविलोचनाडम्बरविडम्बीनि हेरम्ब गुरुशिरसि जटावल्कलानि, कपर्दिनितम्बिनीमानाडम्बरितमृगमदपत्त्रभङ्गसुभगानि गोमिनीपतिश्यामलवपुषि कुरङ्गाकृतिलाञ्छनमहांसि, सततसुरसुन्दरीकरविकीर्यमाण सिन्दूरपरागपिञ्जराणि सुनासीरकरिकुमुदपुण्डरीकेषु शिर पिण्डकुम्भस्थलानि, प्रकामपीतपाटितमुक्तसहचरकरपल्लवपवनविनिवाप्यमानविद्याधरीबिम्बाधराकृतीनि शिशिरशिखरभृति धातुशृङ्गाणि, कुबेरपुरकामिनीकुचचूचुकपल्लवश्यामलानि ललितापतिशैलमेखलासु तमालतरुवनानि, निजनाथावमथपथप्रस्थानपरिणतरतिचरणशिञ्जानमञ्जीरमणितमनोहराणि हसपरिषत्सु शब्दितानि, कलिन्दकन्याकल्लोलजलश्यामायमानोर्मीणि मन्दाकिनीस्रोतासि पयासि, द्विरददपत्नकमपालिखितलिपिस्पर्धानि सरस्वतीनिटिलतटेषु कुन्तलजालानि, रजनिरसरतनतन्तुसन्तानापहासीनि सितसरसिजकोशेषु केसराणि, कम्बुकुलमान्ये च पाञ्चजन्ये कृष्णकरपरिग्रहनिरवधानि न्यधाद्धानि ॥

२९ यस्य च सुजन्मन प्रगुणतरणिमोन्मेषमनोहारिणी यथादेशनिवेशितपरिणयप्रवणगुणप्रोतमणिविभूषणा निसर्गप्रागल्भ्यवती स्वयवरवरणार्थमादिष्टेव कीर्तिपतिंवरा भुवनान्तराणि विरहन्ती ' जरठ जराजनितजवस्खलन कमलासन ' न खलु समर्थस्त्व मे निखिलनगनगरसागरविहारकुतूहलिन्या सहचरकर्माणि कर्तुम्' इति पितामह , ' अहल्यापतिपरिग्रहस्खलितजातयुवतिमुद्राचरानेकवीक्षण क्षतकरण पौलोमीरमण ' नार्हसि प्रणयकलहकुपिताया करजराजिपाटनप्रदानदण्डेऽनानुनयनानि विधातुम् ' इति वृद्धश्रवस्मन्दिन , ' उड्डमरपाण्डुरोगवद्य हुताश, नावकाश ' स्वचि

१ ' तरुणी ' टीकापाठ

विरचितशान्तसर्वाश्रया परिणयनस्य ' इति जातवेदसम् , ' अनपराधजनप्रमथनशालिनस्तव वातापिरिपुत्रिनिन्दवाम ! न स्थानमनङ्गरमनिर्भरभरितहृदयाया केलिकलहानाम् ' इति दशलोचन , ' उल्बणशल्यशिरःशेषशरीरपरिकर निशाचर ! न पद्मिन्दीवरमृणालकोमलभुजलताया सरभसाऽऽलिङ्गनानाम् ' इति वैकसेय, ' उदीर्णोदकोन्मग्नगलितसुरतश्रमाय सागरालय ! न क्षमश्चिरपरिचितकामसूत्राया कालिन्द्यादिकरणोन्नाहरणानाम् ' इति प्रचेतस, ' अतिविदितचापलकुलप्रसूत वात ! न दयित स्थिरनायकसमागमार्थिन्या प्रीतिविलसितानाम्' इति नभस्वन्त,'अनवरतमधुपानपरिच्युतमतिप्रसाद वित्तद ! न गोचरश्चतुराक्तिसुधारसास्वादविस्फुरितश्रवणाञ्जलिपुटाया सहालापगोष्ठीनाम्, इति नरवाहनपितरम् , ' अनुचितचितोपकण्ठपाठ शितिकण्ठ ! न भाजनममलिनशरीराया पृथुजघनमिहागमनारोहणानाम् ' इति कृत्तिवाससम् , ' अनिष्टकुष्ठवह्नुतचरणनख चण्डमयूख ! न प्रभु प्रस्तभपुण्यप्रभावलभ्य सभागाया करसवाहनसुखानाम् ' इति हरितवाहवाहन, ' अक्षयक्षयामयसशयित जीवित बुधतात ! न शरणमगणितसुरसौभाग्यभावितजन्मलक्ष्म्या प्रबन्धनिधुवनविधीनाम् ' इति निशाकर, *'अवनतकालायसतालिकाश्रुतिरलतिमस्तकदेश हृषीकेश !* न समीपमन्यजन्मग्रहग्रहिलविप्रक्षाया कुलिककुन्तलाविलविलोचनचुम्बनानाम् इति मुकुन्द, ' अविरलगरलोल्लमल्लपनजाल भुजङ्गमलोकपाल ! न मगमागमनमनल्पकल्पमकल्पितप्राणितायाश्चुण्डीराधरामृतानाम् ' इति कुम्भीनसप्रभु चाऽनभिनन्दन्ता, मरुमरीचिकाचिषिच्यवच्यमाना मृगाङ्गनेव, पद्मप्रलयत्रासितस्य वसुमतीपतेर्मतिरिव, निखिलमलविलयोन्मीलितान्तरालोकलोचनस्य मुनेर्भावनेव, च न क्वचिदद्यापि प्राप्नोति स्थितिम् ॥

३० यस्य च सुकृतिजनपनपनकरकाश्मीरकेसरारञ्जितस्तुतिमुखरसुरयाचिदलकवलयादा विदिताकुन्याचलन्दरीमदोहादचलन्दरीमदोह्लवदमृतापगाप्रवाहापहसितयश फेनपटलपाण्डुरोपलान्तरालदेशाद्वा सेतुबन्धमेखलाकलकुहरानिखिलाकुलकुहरनिलीनकिन्नरीगणगीयमानदयादमनियमनामशुचिपद्मसादिगीतवाचालकन्दरान्मन्दरधराधरनितम्बाद्धराधरनितम्बाडम्बरस्थपुष्पपथप्रस्थानमन्थरितगतिकीर्तिमन्दाकिनीतरङ्गदन्तुरदरवदनाऽऽचा तुहिनशैलचूलिकाचक्रवालात्तुहिनशैलचूलिकाचक्रवालविलासीनि गायन्ति गुणविजृम्भितानि जनपदगोप्य ॥

## भगवान् सुदत्ताचार्यः स्मरसौमनसं नामोद्यानं पश्यति ।

३१ स भगवान्पुण्यपानीयवर्षी कोऽप्यपूर्वः पर्जन्य इव त्रिजगद्विनेयजनमलप्रसरः पुरस्थानीयद्रोणमुखखार्वटिकमग्रहनिगमग्रामविश्वम्भरा समभिनन्दयन्विहर

माण , प्रणतमकरन्ददिक्पालमौलिमण्डनीभवच्चरणनखरखोत्कर , कैश्चिच्चरणकरणनयनिरूपणगुणहारविहितहृदयभूषणै कैश्चित्समस्तश्रुतधरोद्धरणधृतादिपुरुषधिषणै कैश्चित्पुराणपुरुषचरितविचारचातुरीयशुचिवचनसुमनोविनिर्मितावतंसभूषितभव्यश्रोत्रै कैश्चिदाऽऽत्मेनरतर्ककर्कशोदर्कवितर्काङ्कविकास्यमानभुवनाशयशतपत्रै कैश्चित्तत्त्व्यानघ्यध्योपदेशकच्छस्वच्छन्दोन्छनागच्छन्दतुच्छच्छेकच्छायच्छन्दोव्याख्यानमण्डपनाकै कैश्चिदैन्द्रजैनेन्द्रचान्द्रापिस( श )लपाणिनीयाद्यनेकव्याकरणोपदिश्यमानशब्दार्थसम्बन्धैर्दाधीमरिक्षालितशिष्यशेमुषीपदविन्यासावनीकैरपरैश्च तत्तद्विद्यानवद्यमतिमन्दाकिनीप्रवाहावगाहगौरितान्तेवासिमानसवास‘प्रसरै सितासिचयैरिव परिमुषितकषायकालुष्यैश्चित्रार्पितद्विपैरिव मदरहितै कोकनदकाननैरिव प्रतिपन्नमित्रभावै विश्वंभरेश्वरैरिव प्रणीतविग्रहदण्डैरमराङ्गैरिव परित्यक्तदोषै कामिनीजनैरिव प्रकटितपरलोकागमकामैर्नीनिशाखैरिव प्रकाशितशमयोगतीर्थैर्योगैरनङ्गभोगैरिव निरपलेपैर्वनसमयदिवसैरिव विदूरितरजोभिरखिलद्वीपदीपैरिव नसोपहचरितैर्महावाहिनीप्रवाहैरिव वीतस्पृहाप्रवृत्तिभि स्वक्कुसुमैरिव निसर्गगुणप्रणयिभि कुमारश्रमणमनोभिरिवाऽसजातमदनफलसङ्गैर्निखिलभुवनभक्तान्तरायनेमिभिर्मूलोत्तरगुणोदाहरणभूमिभिर्धर्मामृतवर्षननिजगदानन्दै सब्रह्मचारितालतालकन्दैश्चित्रशिखण्डिमण्डलैरास्तूयमानपुण्याचरणैरन्व.चयीकृतकुसृतिसर्गावतरणैर्भूरिभि पारामीरिभिरपरेण चानूचानेन श्रमणमघेनोपास्यमानपादमूल , तत्रैव दिवसे तदेव पुरमनुसिसीर्पु , घनघोरानकस्वनाकर्णनादुपयुक्तमम प्रणिधान , मर्त्येष्वपि नगरे महतीषु वसतिषु पौराणामतीव प्राणिवधे सरब्धा बुद्धिरित्यवधिना बोधेनाऽवबुध्याऽवधीरितपुरप्रवेश , पूर्वस्या च दिशि निवेशितचक्षु प्रकाश , सुरसुरभिलपनलतनाप्रभागमिव समाशिखरदेशाभोग, कृतसिफोदयमिव स्निग्धदलवलय, इन्द्रनीलकुकोलमिव लोचनोल्लासिशैवाल, अन्योन्यविभवसंभावनोद्भदाशयमिव परस्परव्यतिकरितकिशलयं, अखिलविष्टपोत्पत्तिस्थानमिव गर्भितप्रसूतप्रवर्धमानमहारहार्भकावस्थान, अनङ्गमुनिमण्डलीविहितसहसवासानुरोधमिव निर्दलितनिखिलाबाध, इतरेतरश्रीमत्सरितमिव सकलर्तुशोभासरम्भोचित, अम्बरचरवमनवासकृतकुतूहलमिव गगनतलोच्छलत्स्फुल्लपरिमल, असमशरोद्यानदिवसमिव प्रसवपरागपिष्टातकितदिग्देवतासीमन्तसतान, अशिशिरकरप्रणामप्रणयिनीनामगमविटपान्तरितवपुषामानिमिषयोषितामलिकतटकुड्मलितहस्तनखद्युतिभिरिव पल्लवपुटान्तरालविनिर्गताभि प्रसूनमञ्जरीभिरुपचितोपरितनविस्तार, आम्रघनतरसरापगाभिषेकसशमाङ्गलिकै कलमपल्लवैरिव मधुकरकुलैरकलुषितबहि प्रकार, उज्जृम्भजपापुष्पसपादितबलिर्मिशानमौलिमिव परिणतनागरङ्गनगताशिख, अभि

१ ‘ अनङ्गजाभोगैरिव ’ इत्यपि क्वचित्पाठ ।

नयागमप्रस्तारमिव तालबहुलव्यवहारं, घनार्जुनमिव मन्दारायतनं, जीमूतवाहनचरितावतारमिव नागवल्लीविभवसुन्दरं, मदनायुधसदनमिव संनह्यमानबाणासनं, मकरध्वजाराधनप्रसाधितगात्रैर्मयूरबर्हातपत्रैरिव पूगतरुभिः श्यामलितदिक्पालनिलयं, अपि च क्वचिदक्षोलजालनिर्जितखर्जूरफलपचेलिमतारुणितदिविजविमानचन्द्रशालं, क्वचिल्लवलीदलोड्डमरडम्बरचुम्बितजम्बीरागरालं, क्वचिदश्वत्थोन्धानकदर्थितकपित्थस्कन्धम्, क्वचिन्नमेरुविराजितराजादनासीनसुरसुन्दरीगणगीयमानमनसिजविजयप्रबन्धं, क्वचित्सेचरावतरणपतत्संतानकुम्पल्लसंवलितपारिजातलतान्तं, क्वचित्परमतपश्चरणोपार्जितैः सुकृतैरिव महाफलप्रदायिभिः पनसपादपैरुपघ्नतपर्यन्तं, क्वचिद्वनलक्ष्मीमिव नमिताऽऽत्मीयकान्तिजनितनीलहरिद्दलमुद्यानमपश्यत्।

## स्मरसौमनसोद्यानवर्णनम्।

किं च—

> यद्वृन्तगलितैः पुष्पैरुपहारमुपाहरत्।
> नारोद्भासिनभःशोभां बिभर्त्यावालभूमिषु ॥ ६९ ॥
> यत्प्रान्तपल्लवोल्लासिप्रसूनच्छन्नसंचयम्।
> दधातीन्दुमणिद्योतिपद्मरागाचलश्रियम् ॥ ७० ॥

३२ यत्र च मधुकरकुटुम्बिनीनिकुरम्बाडम्बरचुम्ब्यमानमकरन्दकदम्बलम्बविलम्बितनिजनितम्बिनीबिम्बाधरपानपरवशविलासिनि, सुरतसुखोन्मुखमुखरपरिपेलसखीमरालानेकखगप्रेङ्खलखमुखावलिह्यमानफलितशिखरे समीपशाखिभिः स्खलितप्रसंरप्रानमरसंमुखीनवैरानममानसे, किन्नरमहचरोपरचितकरवाद्यलयलास्यमानमधुमत्तसीमन्तिनीसमालोकनकुतूहलमिलद्वनदेवताभराभग्नकुम्भविटपिनि, वटविटपान्तटङ्कसंकटकोटरोपनिविष्टचाटशुकपेटकपठ्यमानेन विटनिकटरतादोपचाटुपाठेन विघटमानमुनिमनःकपाटपुटसन्धिबन्धे, विकिरकुलकलहवशाविशीर्यमाणकुरबकतरुमुकुरमुक्ताफलितनितम्बिकावलिकर्मणि, चपलकपिसंपातलुसमानभराभिर्निर्भरविभ्रमारम्भसम्भ्रमाभिर्भामिनीभिः परिरभ्यमाणनिभृतसरसापराधवल्लभे, भुजमूलपुलकवितरणरतकान्तकैतवान्तरायितयुवतिपुष्पावचितिनि, सरलद्रुमस्तम्भसंभूतलतादोलातिविनिर्मितासु पीनस्तनलिखितपत्रलाञ्छितोरःस्थलरमणरसरभसोच्छलद्दुत्तालचलनासु लीलान्दोलासु विलम्बन्तीनां विलासिनीनां मुखरमणिमेखलाजालवाचालितप्रबहलपक्षमालक्षिपल्लवितविरहवारिधि, जम्बूकुञ्जकुञ्जगुञ्जत्पारापतपतङ्गमदीपितमदनमन्दरि-

## तदुद्यानं तपोऽर्थमयोग्यमिति सुदत्ताचार्यस्य मनसि वितर्कः ।

३३ तदेवमनेकलोकोत्पादितप्रत्ययाया पुरदेव्या सिद्धायिकाया सर्वसत्त्वाभयप्रदावामरस स्मरसौमनस नामोद्यानमवलोक्य,

" प्रह्लस्तम्भनितम्बिनीरतिकथाप्रारम्भचन्द्रोदया
कामं कामरसावतारविषयव्यापारपुष्पाकराः ।
प्राय प्राप्तसमाधिशुद्धमनसोऽप्येते प्रदेशाः क्षणा-
त्स्वान्तध्वान्तकृतो भवन्ति तदिह स्थातुं न युक्तं यते." ॥७१॥

इति च वितर्क्य, मनागन्त स्तिमितमानस प्रसरदनेकवितर्करस सकलजगदायात धर्मनाधस्मर स्मर खलु श्मशानवासिनमप्यानयत्यात्मनो निदेशभूमिं, किं पुनर्न गोचरपतितम् । मनो हि केवलमपि स्वभावतो विषयान्वामवगाहते, किं पुनर्न लब्धानङ्गशृङ्गारप्रदेशम् । कथाऽपि खलु कामिनीनां चेतो विभ्रमयति, किं पुनर्न नयनपथमुपगतस्तासा सभोगसभव केलिप्रबन्ध । करणानि तु नियमनियन्त्रितान्यपि स्वच्छन्द विजृम्भन्ते, किं पुनर्न प्राप्तस्वविषयवृत्तीनि, बोधाधिपतिराकाशेऽपि सकल्पराज्यमारचयति, किं पुनर्न पर्यवासितव्रति प्रकृति । वयोऽपि न यमस्येव मनसिजव्यापारस्य किंचित्परिहर्तव्यमस्ति । प्रत्युताऽऽवानोध्विन्धनपु वह्निरिव नितान्त ज्वलति वृद्धेषु मकरध्वज । तच्च मनो महामुनीनामपि दुर्लभ यत्र कुलिशे घुणकीट इव प्रभवितु न शक्नोति विषयवर्ग । श्रूयते हि किलाऽलक्ष्यजन्मनो दक्षसुताना जलकेलिविलोकनात्तप प्रत्यवाय, पितामहस्य तिलोत्तमासगीतकात्, कैवर्तीसमासात्पाराशरस्य, रथनेमेश्च नटीनर्तनदर्शनात् ।

३४ अपि च—

क्षीणस्तपोभि क्षपित प्रवासैर्विध्यापित साधु समाधितोयै ।
तथापि चित्र ज्वलति स्मराग्नि कान्ताजनापाङ्गविलोकनेन ॥ ७२ ॥

तावत्तपो वपुषि चेतसि तत्त्वचिन्ता
काम हृषीकविषय परम शमश्च ।
यावन्न पश्यति मुख मृगलोचनानां
शृङ्गारवृत्तिभिरुदाहृतकामसूत्रम् ॥ ७३ ॥

श्रोत्रं श्रुता हरति वीक्षणमीक्ष्यमाण
श्चित्त स्मृतः कृतसमागतिरङ्गकानि ।
प्राणान्पुन प्रणयवान्वियुतो रतिं च
लोके तथापि वनिताजन एव यत्न. ॥ ७४ ॥

तपो मृगायते पुंसां समं धीधैर्यलज्जितैः ।
स्त्रीणां भ्रूचापविश्रान्तनेत्रापाङ्गशराहतेः ॥ ७५ ॥

तथा सकृत्स्खलितं च चेतः प्रासाद इव पुनः दुष्करमुद्धर्तुम् । दूरतरमुन्नतानि गिरिशिखराणीव शक्यन्ते शरीरिणां हृदयानि सुखेनैवाधस्तात्पातयितुमारोहयितुं न पुनर्दुःखेनापि ।

३५ भवन्ति च ' श्रेयांसि बहुविघ्नानि ' इति विदुषां प्रवादः । श्रुताभ्यासश्च बिसतन्तुर्दन्तिनमिव प्रत्यवस्यन्तमात्मानमलं न भवति निवारयितुम् । तनुच्छद इवाऽधीरधीषु न जायते चलतश्चित्तस्य त्राणाय देहदाहकरागमः संयमः । बहिरस्था-यस्थितः पारदरस इव द्वन्द्वपरिगतः पुमान्क्षणमपि नाऽस्ते प्रसंख्यानक्रियासु । वृन्दमपीदं वनादानीतं करियूथमिवाऽपापि न संभवति प्रायेण क्षान्तिनिष्ठितम् । सर्वदोषदुष्टं व्यालकुण्डालमिवाऽत्मीयामपरिपक्वशिक्षोपदेशमिन्द्रियग्राममतियत्नेनाऽपि संरक्षितुं न तरति पुरश्चारिलोकः ।

किं च—

तावद्गुरवो गण्यास्तावत्स्वाध्यायधीरितं चेतः ।
यावन्न मनसि वनितादृष्टिविषं विशति पुरुषाणाम् ॥ ७६ ॥

तावत्प्रवचनविषयस्तावत्परलोकचिन्तनोपायः ।
यावत्तरुणीविभ्रमहृतहृदयो न प्रजायेत ॥ ७७ ॥

गुरुवचनस्य हि वृत्तिस्तत्र न यत्राऽस्ति संगमः स्त्रीभिः ।
अबलालापजलप्लवधिरितकर्णे कुतोऽवसरः ? ॥ ७८ ॥

संसर्गेण गुणा अपि भवन्ति दोषास्तदद्भुतं नैव ।
स्थितमधरे रमणीनाममृतं चेतांसि कटुरयति ॥ ७९ ॥

लटहयुवतिकटाक्षैर्गादमगुरुतां जनः स्वयं नीतः ।
चित्रमिदं ननु यत्तां पश्यति गुरुबन्धुमित्रेषु ॥ ८० ॥

तस्मात्—

द्वयमेव तपःसिद्धौ बुधाः कारणमूचिरे ।
यदनालोकनं स्त्रीणां यच्च संग्लापनं तनोः ॥ ८१ ॥

३६ इति च विचिन्त्य, ' तदलमत्र बहुप्रत्यूहव्यूहदाम्नायया निषद्यया ' इति च निश्चित्य परिक्रम्य च लोकमन्तरं सर्वजिह्माजिह्मव्याजभ्राजदुर्नीहृत्याकाता-लावण्यं श्मशानारण्ये व्यलोकत ॥

## श्मशानारण्यवर्णनम् ।

( स्वगतम् । ) अहह, पश्यत सकलानामप्यमङ्गलानामसमसमीहाभवनं पितृवनम् ।

यतः—

कालव्यालरदाङ्कुरेरिव भरैः शल्योत्करैः पूरितं
कालग्राहविगीर्णफेनविकलैः कीर्णं शिरोमण्डलैः ।
कालव्याधविनोदपाशविवशैः केशैश्चितं सर्वतः
कालोत्पातसकृत्प्रसूछदचयैश्छन्नं च भस्मोच्चयैः ॥ ८२ ॥

इतश्च यत्र—

अर्धदग्धशवलेशलालसैर्भण्डनोद्भटरटद्गलान्तरैः ।
कालकेलिकरकौतुकोद्यतैर्विश्वकद्रुभिरुपद्रुतान्तरम् ॥ ८३ ॥

यत्र च—

श्येनकुलं घूककुलं द्रोणकुलं श्वकुलभण्डनाक्रीनम् ।
शवपिशितप्राशवशाद्दिवि भुवि च समाकुलं पुरतः ॥ ८४ ॥

इतश्च—

गृध्राघ्रातसमांसकीकसरसस्रावोत्पथाः पादपाः
प्रेतोपान्तपतत्पतत्रिपरुषप्रायाः प्रदेशा दिशः ।
एते च प्रबलानिलाश्रयवशाच्छीर्यच्चिछखाः सर्वतः
संसर्पन्ति जरत्कपोतरुचयो धूमाश्रिताचक्रजाः ॥ ८५ ॥

इतश्च यत्र—

कालाग्निरुद्रनिटिलेक्षणदुर्निरीक्षाः कीनाशहोमहुतवाहविरुक्षवीक्षाः ॥
दाहद्रवच्छववपुःस्फुटदस्थिमध्यप्रारब्धशब्दकठिना दहनाश्चितानाम् ८६

इतश्च—

सर्वदेहभृतभस्मनिकायः प्रेतचीवरकरालितकायः ।
कन्दलोल्बणवपुः पवमानः क्रीडति प्रमथनाथसमानः ॥ ८७ ॥

किं च ।

भ्रश्यच्छरीरशवशीर्णशिरोजसारः कुथ्यत्कलेवरकरङ्कहतप्रचारः ।
दग्धार्धदेहमृतकाग्निमयप्रबन्धो वातः करोति ककुभोऽशुभगन्धबन्धाः ८८

इतश्च यत्र—

यान्युत्सवेषु कृतिनां कृतमङ्गलानि
वाद्यानि मोदिजनगेयनिरर्गलानि ।

तान्येव शोकवशबान्धुरवोद्धुराणि
नर्दन्ति संस्थितवतां चिरसम्भवराणि ॥ ८९ ॥

अपि च—

यमभुक्तिसमयपिशुनः क्रव्यादसमाजसंलयव्यसनः ।
जगदस्थैर्योद्घोषः परासुतूर्यस्वरः पुरतः ॥ ९० ॥

किं च—

अचिरेण तत्कुरुध्वं यतो भवेन्नाजवञ्जवक्लेशः ।
नो चेदियं दशा वो भवितेति ध्वनति शवतूर्यम् ॥ ९१ ॥

इतश्च यत्र—

अस्तोकशोकवशिकाशयशीर्णशङ्कै-
र्लोकैश्चिताचरितबान्धवसन्निवेशैः ।
मुक्ता न कस्य हृदयं परिखेदयन्ति
बाष्पोद्गनिस्खलितवेगवशा विलापाः ॥ ९२ ॥

इतश्च यत्र—

कलिकालकायकान्ताः शोकादिव दहनबान्धवक्षयजात् ।
अङ्गाराः शल्यधराः क्षयक्षपानारकाकाराः ॥ ९३ ॥

इतश्च यत्र—

दन्तोन्मीलितशुष्कशीर्षसकलाकीलोद्गलत्तालुकाः
कण्ठान्तःप्रविशत्प्रशल्यशकलोद्गालस्खलत्कुक्षयः ।
प्रेतप्रान्तपुराणपादपपतत्पत्रप्रदुष्यद्दृशः
प्रभ्राम्यन्त्यविशङ्कफेत्कृतिकृतिक्षीणाः शिवाः सोद्भवाः ॥९४॥

इतश्च । कथं नामेयमनङ्गमदमहिम्नलोकलोचनानन्दचन्द्रिका चेतोभवानुचरमानवमनोमर्कटक्रीडावनविहारवर्गनिर्गुणनिर्ङ्गीनान्तरात्मदर्मा गन्धमण्डलावासवायमपक्षमान्तापादितावर्तना इदमवस्थान्तरमधात् ॥

तथा हि—

या पूर्वं स्मरकेलिचामररुचिः कर्णावतंसोत्पल-
श्रेणीन्दिन्दिरसुन्दरद्युतिरभूत्कन्दस्वन्नीसज्जनम् ।
सेयं कुन्तलवल्लरी विलुपते वातेरिता साम्प्रतं
धूलीधूसरिता दधाति विसरत्संमार्जनीचेष्टितम् ॥ ९५ ॥
ये पूर्वं कामकोदण्डकोटिप्रकटविभ्रमे ।
ते संप्रति भ्रुवौ जाते शुष्कचन्द्रकसन्निभे ॥ ९६ ॥

ये नीलरत्नरचनान्तचन्द्रकान्तदृशौ दृशौ ।
ते जीर्णोदश्चनक्लिन्नद्रवबुद्बुदसन्निभे ॥ ९७ ॥
ये स्लाकेलिदोलाभे मुखलक्ष्मीलतोपमे ।
ते श्रुती विचटच्छद्धवार्धरन्ध्राधमस्थिती ॥ ९८ ॥

कस्तूरिकातिलकपत्रविचित्रितश्री
यौऽभून्मृगाङ्कसमकान्तिरयं कपोलः ।
सोऽद्य च्छविं वहति वायसशालभुक्त
कोथप्रदीर्णतनुतुम्बफलोपमेयाम् ॥ ९९ ॥

या कामकेलीशुकतुण्डकान्ता पातु मुखामोदमिवाऽऽयताऽभूत् ।
सा गन्धवाहा विवरावशेषनिवेशनिर्गच्छदतुच्छपूया ॥ १०० ॥

यत्राधरेऽमृतधिया नवपल्लवाभे
कामं कृतार्थहृदयः समपादि लोकः ।
सोऽजस्रविस्रविवशस्रुतपूयपूर
पर्यन्तवृत्तिरधरत्वमगण्यमागात् ॥ १०१ ॥

या चन्द्ररत्नाङ्कुरसन्निवेशा मूले स्थिता शोणमणिद्रवेण ।
सा दन्तपङ्क्तिः करपत्रयन्त्रदत्तान्तच्छविः क न दुनोति लोकम् ? ॥१०२॥

यः कण्ठः कम्बुसङ्काशः कलकोकिलनिस्वनः ।
स विशीर्णशिरासन्धिर्जरत्पञ्जरतां गतः ॥ १०३ ॥

यौ हारनिर्झरलसन्नवपत्रकान्तौ
क्रीडाचलाविव मनोजगजस्य पूर्वम् ।
तौ पूतिपुष्पफलदुष्टदशाविदानीं
वक्षोरुहौ बलिभुजां बलिपिण्डकल्पौ ॥ १०४ ॥

लावण्याम्बुधिवीचिरोचितरुचौ हस्तौ मृणालोपमौ
कामारामलताप्रतानसुभगौ प्रान्तोल्लसत्पल्लवौ ।
यौ पुष्पास्रपिशाचसन्धिविधुरौ लीलाविलासालसौ
तौ जातौ गतजङ्गलौ प्रविजरत्कोदण्डदण्डद्युती ॥ १०५ ॥

यः स्तनोऽभूत्पुरा मध्यो वलित्रयविराजितः ।
सोऽद्य द्रवद्रसो धत्ते चर्मकारदृतिद्युतिम् ॥ १०६ ॥
केलिवापीव कामस्य नाभी गम्भीरमण्डला ।
याऽऽसीत्सा निर्गतान्त्रान्ता स्वपसर्पबिलाविव ॥ १०७ ॥

या कामशरपुङ्खाग्रसमग्राभोगनिर्गमा ।
साऽधदग्धाजिनप्रान्तविवर्णा तनुजावली ॥ १०८ ॥
स्मरद्विपविहाराय यज्जातं जघनान्तरम् ।
तद्गलत्क्लेदविक्लिन्नं जघन्यत्वमगात्परम् ॥ १०९ ॥
या कामकलभालानस्तम्भिकेवोरुवल्लरी ।
सा श्वनिर्दूनलावण्या वानवेणुपरप्रभा ॥ ११० ॥
ये पूर्वं स्मरशरधी श्लक्ष्णच्छविवर्तिते सुवृत्ते च ।
कौलिकनलकाकारे ते जङ्घे साम्प्रतं जाते ॥ १११ ॥
यत्राऽऽलक्तकमण्डनं विरचितं यत्राऽऽलितौ नूपुरौ
यत्राऽऽसीद्वरमौक्तिकावलिकलाकान्ता नखानां ततिः ।
यत्राऽशोकदलोच्चयश्च सममूत्क्रीडाविहारोचित-
स्तावेरण्डजरण्डकाण्डपटलप्रस्पर्धिनौ क्रमौ ॥ ११२ ॥

किं च—

या कौमुदीव सरसीव मृणालिनीव
लक्ष्मीरिव प्रियसखीव विलासिनीव ।
तैस्तैर्गुणैरजनि सा सुतनुः प्रजाता
प्रेतावनीवनवशा विवशा वराकी ॥ ११३ ॥
यस्याः केलिकलैः कलं कररुहैः सीमन्तिताः कुन्तला
यस्याश्चन्दनचन्दनं प्रणयिभिर्भालान्तरे निर्मितम् ।
यस्याश्चैणमदेन कामिभिरयं चित्रः कपोलः कृतः
सा खट्वाङ्गकरङ्कचक्रविकृतिं तत्रैव धत्तेऽङ्गनम् ॥ ११४ ॥
या मानसकलहंसी नेत्रोत्पलचन्द्रिका च या जगतः ।
सा कालमहाव्रतिना खट्वाङ्गकरङ्कतां नीता ॥ ११५ ॥
यदभ्यस्यति यो लोकः स भवेत्तन्मयः स्फुटम् ।
प्रकामाभ्यस्तखट्वाङ्गे युक्ता खट्वाङ्गता ततः ॥ ११६ ॥
लतिकेव प्रणयतरोर्या वनदेवीव केलिवनभूमेः ।
सा यमनृपतिविमुक्ता फेलेव प्राश्यते पतगैः ॥ ११७ ॥
जीवन्त्येषा यथैवाऽऽसीत्सर्वस्य हृदयंगमा ।
मृताऽप्यभूत्तथैवेयं दुस्त्यजा प्रकृतिर्यतः ॥ ११८ ॥
हंसायितं वदनपङ्करुहे स्मरार्त-
र्यस्या गजायितमभूत्कुचकुम्भमध्ये ।

एणायितं च जघनस्थलमेखलायां
तस्याः कलेवरममी निकषन्ति कङ्काः ॥ ११९ ॥

पायं पायं मधु मधुरहक्पूर्वमुद्गर्वभावा-
त्सारं स्मारं वदति च कलं या मुदा कुञ्चितभ्रूः ।
साऽद्यैतस्मिन्नपगतमनोमर्कटत्वादनीहा
प्रेतावासे निवसति गता भोज्यभावं शिवानाम् ॥ १२० ॥

यामन्तरेण जगतो विफलाः प्रयासा
यामन्तरेण भवनानि वनोपमानि ।
यामन्तरेण हतसंगति जीवितं च
तस्याः प्रपश्यत जनाः क्षणमेकमङ्गम् ॥ १२१ ॥

आश्लिष्टं परिचुम्बितं परमितं यद्रागरोमाञ्चितै-
स्तत्संसारसुखास्पदं वपुरभूदेवं दशागोचरम् ।
दीर्यच्चर्मचयं पतत्पलभरं भ्रश्यच्छिरापञ्जरं
व्यस्यत्संधिबलं गलच्चलकुलं कुथ्यत्स्नसाजालकम् ॥ १२२ ॥

आः, कष्टादपि कष्टतरमहो ! स्मरविलसितम् ।

इत्थमन्तर्दुरन्ताङ्गी बहिर्मधुरविभ्रमा ।
विषवल्लीव मोहाय यदेषा जगतोऽजनि ॥ १२३ ॥

अपि च—

मायासाम्राज्यवर्याः कविजनवचनस्पर्धिमाधुर्यधुर्याः
स्वप्नाप्तैश्वर्यशोभाः कुहकनयमयारामरम्योत्तराभाः ।
पर्जन्यागारसारास्त्रिदिवपतिधनुर्बन्धुराश्च स्वभावा-
दायुर्लावण्यलक्ष्म्यस्तदपि जगदिदं चित्रमत्रैव सकम् ॥ १२४ ॥

## श्मशानेऽपि मुनीनामुचितावकाशाः प्रदेशा नेति तन्निश्चयः ।

३७ हंहो हृदय, स्वरं दूरमन्वमर । तदलमवस्तुनि व्यासङ्गेन । इदमिह ननु प्रस्तुतमवधार्यम् ।

' नैवाऽत्र सन्ति यमिनामुचितावकाशाः
स्वाध्यायबन्धुरधरावसराः प्रदेशाः ।
वृन्दं महत्तपन एष तपत्युदारं
वाताश्च यान्ति परितः परुषप्रचाराः ॥ १२५ ॥

किं च—

> यन्मृतानामवस्थानं तत्कथं जीवतां भवेत् ।
> अन्यत्र शवशीलेभ्यः को नामेहाऽऽग्रहस्तनः ॥ १२६ ॥

## मुनिमनोहरमेखलं नाम पर्वतं मुदत्ताचार्योऽधिवसति ।

३८ पुनर्यावदयं दिगन्तरालेषु लोचने प्रचारयति तावदुत्तरस्यां हरिति राजपुरस्याऽविदूरवर्तिनं मुनिमनोहरमेखलं नाम खर्वेतरं पर्वतमपश्यत् । यः खलु धम्मिल्लविन्यास इव नागनगरदेवतायाः, किरीटोच्छ्रय इवाऽटवीलक्ष्म्याः, स्तनाभोग इव महीमहिलायाः, क्रीडाकन्दुक इव वनदेवतायाः, मातृमोदक इव दिग्बालकलोकस्य, ककुदोद्गम इव भूगोलगवेन्द्रस्य, द्वारपिधानस्तूप इव भुजङ्गभुवनस्य, यष्टयधिष्ठानबन्ध इव विहायोविहङ्गमस्य, त्रिविष्टपकुटनिर्माणमृत्पिण्ड इव प्रजापतिजनस्य, केलिप्रासाद इव ककुप्पालककन्यकानिकरस्य, गतिस्खलनलोष्ट इव कलिकालस्य, मानस्तम्भ इवैकशिलाघटितारम्भः, शिवशातकुम्भप्रदेश इव विदूरितदर्पितासमावेशः, अलोकाकाश इव विगतजन्तुजातावकाशः, तपश्चरणागम इव समुत्सारितवर्षधरसमागमः, क्षपकश्रेणिरिव सप्रत्यवायरहितक्षोणिः, महावृत्तप्रस्तार इव विस्तीर्णपादविस्तारः, समीरकुमारैर्विरचितविशुद्धिरिव स्वाध्यायोचितः, कान्तारदेवताभिः संमार्जित इव कमनीयकन्दरः, पर्यन्तपादपैः संपादितकुसुमोपहारः प्रदत्तरङ्गावलिरिव गुहापरिसरेषु, क्षुपावृतोपान्तोपत्यकः पुलकित इव महामुनिसमागमात्, स्रवन्निकुञ्जनिर्झरजलः प्रकटितानन्दलोचनबाष्प इव संयमिसंभावनाराधनात्, लयनशिलाश्लाघ्यमेखलः परिकल्पितोशीर इव द्वयालिगानामेवमन्यैरपि तैस्तैरघमर्षणैर्गुणैस्त्रिविधस्याऽपि कर्मेन्द्रिवृन्दस्योपपादितप्रीतिः ॥

## स श्रमणसङ्घं विष्वाणार्थं ग्रामेष्वादिशति ।

३९ तमुपसद्य निषद्य च निर्वर्तितमार्गमध्याह्नक्रियः स्वयं तद्दिवसोपात्तोपवासः (स) समाकलय्य च परिणतकालमहर्दलमखिलं श्रमणसङ्घमात्मदेशीयेनाऽन्तेवासिनाऽधिष्ठितं लोचनगोचरारामेषु ग्रामेषु विष्वाणार्थमादिदेश ॥

## अभयरुच्यभयमतिनाम मुनियुगलमपि विष्वणार्थमादिशति ।

४० तत्र च नन्दिनीनरेन्द्रस्य यशोधरमहाराजात्मजस्य यशोमतिकुमारस्याऽग्रमहिष्यां चण्डमहासेनसूनुनामारिदत्तमहीश्वरमहीरहस्याऽनुजन्मतास्ताकन्दल्यां कुसुमावल्यां सह संभृतं पूर्वभवस्मरणात्संसारसुखास्यागामिनत्सदु -

प्याङ्कुरप्रसूतिक्षेत्राणीव मन्यमानमङ्गस्याऽद्यापि जिनरूपग्रहणायोग्यत्वाच्चरमाचारव दशामुपासकदशामाश्रितवदल मुनिकुमारकयुगल 'अस्मात्खल्वस्य पौरपुरेश्वरदेवताना धर्मकर्मावेशादुपशमो भविष्यति' इत्यन्त सकलपकृशानुकृतप्रबोधेनावधिबोधप्रदीपेन प्रत्ययमृश्य तत्रैव पुरे तदर्थमादिक्षत ॥

## कोट्टपालकिङ्करा अभयरुच्यभयमती चण्डमारीभवनमानयन्ति ।

४१ तदपि त भगवन्तमुपसगृह्य मनुष्यरूपेण परिणत धर्मद्वयमिव, मर्त्यलोकावतीर्ण स्वर्गापवर्गमार्गयुगलमिव, नयनविषयता गत नययमलमिव, प्रदर्शिताम्रूप प्रमाणद्वितयमिव, बहि प्रकटव्यापार शुभध्यानयुग्ममिव, तपश्चिकीर्षया प्रतिपन्न मोदरभाव रतिस्मरमिथुनमिव, पुरो युगान्तरावलोकप्रणिधानाधारैर्दयार्द्रनयनव्यापारैरभयदानामृतमिव प्राणिषु प्रवर्षत, समन्तादुन्मुखालेखाहैंश्चरणनखमयूखप्ररोहबर्हैर्वर्त्मनि कृतमखानुकम्पन मयमोपकरणमिव पुनरुक्तवत, परिगृहीतमहातप-श्चरणभारमिव मन्दमन्दमध्वनि विहितविहार, अभिमानव्ययभयाद्विभ्यदिव पुरवीथिषु निभृतजिह्वारथ, अतिबाल्यदशामपि श्लाघनीयशीलैस्तप पयोधिकल्लोलैर्वरीयसामपि शसितव्रतचेतसामाचरिताश्चर्यचित्तचमत्कार,

> ' न दैन्यात्प्राणाना न च हृदयहारिणस्य रतये
>
> न दर्पाद्दगानां न च करणकरिणोऽस्य मदनाम् ।
>
> विधावृत्ति किं तु क्षतमदनचरितश्रुतविधे
>
> परे हेतौ मुक्तेरिह मुनिषु न खलु स्थितिरियम् ॥ १२७ ॥ ८
>
> श्रुताय येषां न शरीरवृद्धि श्रुत चरित्राय च येषु नैव ।
>
> तेषा वलित्व ननु पूर्वकर्मव्यापारभारोद्वहनाय मन्ये ॥ १२८ ॥
>
> ससारवार्धेस्तरणैकहेतुमस्मारमप्येनमुशन्ति यस्मात् ।
>
> तस्माच्छरीरैरपि रक्षणीय काय पर मुक्तिलताप्ररूत्यै ॥ १२९ ॥

इति विचिन्तयत्, तस्मान्महामुनिसमानन्दितवनदेवतामुखमण्डलाद्दण्डदोलाधिचतुराणि निवर्तनान्यतिक्रान्त, आपातदु सहैर्महापरीषहैरिव तप परीक्षितुमुपात्तासुराकारविधिभिरधर्मप्रणिधिभिरिव प्रतिपक्षभावनाप्रकोपप्रपूर्णै कर्मभिरिव धर्मध्वसप्रबलै कलिकालबलैरिव च तैस्मदानयनाय तेन महीक्षिता प्रेषितैर्नागरिकानुचरगणै परिगृह्य परस्पराचरितवक्त्रवीक्षणै ' भा, कस्य खलु शरीरिणां मेवया जीवनचेष्टा पुरुषेषु । यस्मात्—

> सत्य दूरे विहरति समम साधुभावेन पुसा
>
> धर्मश्चित्तात्सह करुणया याति देशान्तराणि ।

तबाहुभिः कैश्चित्परेतपतिपुरमार्गानुकारिकाण्डचण्डितचमरचमूर( रु )हरिहरिणरुरुवराहवानरगोरसुराकुलितहस्तैरपरैश्च यमावासप्रवेशपरमासपट्टिसदुस्फोटभुशुण्डिभिण्डिमा( न्दिपा )लमुद्गराद्यनेकायुधाबाधनिरोधितस्थलजलबिलान्तरालजातजन्तुजनितभुजप्रयासैरद्यापि काश्यपीश्वरेण स्वयमालम्भनारम्भासम्भवादविहितहिंसाव्यवसायैर्नैगमनगरग्राम्यारण्यजन्मसमग्रसत्त्वैः प्रसन्नैः समस्तं जगत्संजिहीर्षुभिः पिनाकपाणिपरिजनैरिव परिवृतं महाभैरवं नाम तद्देवतायतनमानिन्ये ॥

## अभयरुच्यभयमती देवीमन्दिरे मारिदत्तभूपं पश्यतः ।

४२ तत्र च ताभ्यां ' क्व चावयोर्जन्म क्व चेदं वयः, क्व चाऽयं चरमदशाश्लाघनीयस्तपश्चरणप्रक्रमः क्व चायं धर्मान्तरायपरम्परायां दैवस्य महती निघ्नता, क्व चाऽयमेतद्देशप्रदेशप्रवेशः ' इति मनागनुशयम्निमितगतिभ्यामखिलदिग्वलयावलोकिभिरवलोकितैरुपहारायोपनीतानामङ्गिनामाजन्मजीवनजुषः कमलकुवलयकुसुमाशिष इव स्पर्शयद्भ्यामुत्सर्पिभिस्त्रैलोक्यपावनालवैः पान्थनयनमयूखैस्तथाविधेषु दृष्टिपुवधानुबन्धिवयासि मनस्तमासीव सान्त्वयद्भ्याम्

उत्खातखड्गो मुनिबालकाभ्यामलोकि भूपो भवने भवान्याः ।
नितम्बबिम्बोत्फणभोगिभीमस्तटीधरो मध्य इवाऽऽपगायाः ॥१३४॥

अपि च हिंसाध्यवसायाशयस्खलनप्रवृद्धक्रोधानुबन्धादन्धकमोत्साहः सिंह इव व्यालोलल्लोचनः सहाराविष्टः शिखिपिच्छ इव भ्रुकुटिभीमः, समालोकितारातिघटसुभट इव स्फुरिताधरः सपत्नलोहिताविहितस्नानकामः परशुराम इव शोणशरीरः, प्रकटिततडिद्दण्डडम्बरः प्रलयकालाम्भोधर इव निस्त्रिंशदुर्दर्शः, प्रत्यूहितस्वान्तः कृतान्त इव भीषणाकारः, क्रौर्यानलस्फुलिङ्गवर्षोचितैर्वीक्षितैः पर्यन्तेषु दावदाहव्याप्तिमिव परिस्फारयन्

किं च ।

ज्वलन्निवाऽन्तर्ज्वलितेन तेजसा दहन्निवोग्रेण विलोकितेन ।
आशीविषः सर्प इवाऽतिरौद्रश्चण्डेन खादन्निव चेष्टितेन ॥ १३५ ॥

## महाभैरवमन्दिरस्थचण्डमारीदेवतावर्णनम् ।

४३ सा देवता च

दंष्ट्राकोटिनिविष्टदृष्टिकुटिलव्यालोकविस्फारित
भ्रूभङ्गोद्भटभावभीषणमुखत्रस्यत्त्रिलोकीपतिः ।

१ ' समस्तेन्द्रियेणाङ्गेन ' इति टीकाया क्वचित्पाठः ।

ललाटोल्बणलोचनानलमिलज्ज्वालाकरालाम्बर-
प्लुष्टद्विट्पुरत्रय विजयते यस्याः प्रचण्डं वपुः ॥ १३६ ॥

यस्याश्च

उत्सर्पद्दर्पसर्पाकुलविकटजटाजूटविभ्याढिधानि
प्रान्तप्रङ्खत्कपालावलिचलनरणद्घण्टखट्वाङ्गकानि ।
दैत्यध्वंसप्रमोदोड्डुरविधुतकराभोगखर्वाद्रिरोणि
स्फारापघातड्घ्रिपातोच्छलदुदधिजलान्युद्धतोद्वेल्लितानि ॥ १३७ ॥

४५ अपि च तस्याः शरीरे मनसि च किञ्चित् नैर्घृण्यं वर्ण्यते । यस्याः कपाल मालाः शिखण्डमण्डनानि, शवशिशवः श्रवणावतंसाः, प्रमितप्रकोष्ठाः कर्णकुण्डलानि, परलोकिमणयः कण्ठभूषणानि, परासुनरास्थीनि शरीरवर्णकानि, गतजीवितकरङ्का करक्रीडाकमलानि, मौशुलिन्धव सध्याचमनकुल्या, पितृवनानि विहारभूमयः, चिताभस्मितानि चन्द्रकवलाः, चण्डातकमार्द्रचर्माणि, मारसत मृतकान्त्रच्छेदाः, प्रनर्तनप्रदेशाः मास्थितोर स्थलानि, कन्दुकविनोद स्नभोत्तमाङ्गं, जलकेल्य शोणित दीर्घिकाभिः, निशावशिप्रदापा श्मशानकृशानुकीलाभिः, प्रत्यवमानोपकरणानि नरशिर करोटिभिः, महान्ति दोहदानि च सर्वसत्त्वोपहारेण । या च लघीयसी भगिनीव यमस्य, जननीव महाकालस्य, दूतिरिव कृतान्तस्य, सहचरीव कालाग्निरुद्रस्य, महानसिकीव मातृमण्डलस्य, धात्रीव यातुधानलोकस्य, श्राद्धभूमिरिव पितृपतिपक्षस्य क्षयरात्रिरिव समस्तजन्तूना,

न केवलमसौ नाम्ना चण्डमारीति पप्रथे ।
अप्यङ्घ्रिसञ्चारिभिश्चण्डमारीति विश्रुता ॥ १३८ ॥

## अभयरुच्यभयमत्योर्धर्ममुद्दिश्य परस्परसंलापः ।

४६ तत्र सकलकवलयामृतरश्मिरभयरुचिमुनिकुमारस्तादृग्विध जनसंबाधम- वनि भानार दैवताकार चावलोक्य

"विशुद्धबोध नप पश्य रक्षा प्राणिष्वरण्येषु च सयतानाम् ।
अन्तःकृतान्तेऽपि समीपवृत्तौ मा तन्मनो मा स्म कृथा निरीशम् ॥ १३९ ॥
जीवस्य सद्दर्शनरत्नभाजश्चारित्रयुक्तस्य समाहितस्य ।
आशान्तितो मृत्युरुपप्रयाता परं प्रमोदस्य समागमाय ॥ १४० ॥
मा मृतिर्यत्र जन्तूना पुरो दु खपरम्परा ।
दण्ड्याऽस्य पुनर्मोक्षात्पुण्यभाजा महोत्सव ॥ १४१ ॥'

इति निवेदयन्निव यतो मां कदाचिदस्या वेगो भावश्चिरान्मनोरथगतैरामा-

दितमिदं मनुष्यजन्म विफलतां नैषीदिति कृतानुकम्पनः सकरुणमभयमतेः स्वसुर्मुखमवालोकिष्ट । यद्वैरपि

पर्याप्तं विरसावसानकटुकैरुच्चावचैर्नाकिनां
सौख्यैर्मानसदुःखदावदहनव्यापारदग्धात्मभिः ।
इत्थं स्वर्गसुखावधीरणपरैराशास्यते तद्दिनं
यत्रोत्पद्य मनुष्यजन्मनि मनो मोक्षाय धास्यामहे ॥ १४२ ॥

यस्तु लब्ध्वाऽपि जन्मेदं न धर्माय समीहते ।
तस्याऽऽत्मकर्मभूमीषु विजृम्भन्तां भवाङ्कुराः ॥ १४३ ॥

स्थिरप्रकृतिरभयमतिरपि

तेनैव पर्याप्तमुदारबुद्धे ! स्नेहेन मे पूर्वकृतेन वत्स ! ।
तस्मात्स्वदेहे मयि च क्षताशः परं पदे तत्र मनो निधेहि ॥ १४४ ॥

त्वं मोक्षलक्ष्मीक्षमदीक्षदेहः स्त्रीत्वात्तु तन्मान्यमिदं वपुर्मे ।
अतो मदीयाङ्गहनान्तरायो मुक्त्यङ्गनासंगमने यतस्व ॥ १४५ ॥

इति विदितपरमार्थतयाऽवधीरितमरणभया प्रमादवज्रिरपाङ्गपाते सहजन्मनश्चेतसि शोचनचिन्तामिवाऽपचिन्वती तदाननमपश्यत् । किं च ।

देहायत्ते कर्मण्ययं नरः स्त्रीजनोऽयमिति भवति ।
चित्तायत्ते कर्मण्यधिका नारी तु मध्यमः पुरुषः ॥ १४६ ॥

## तन्मुनिकुमारकयुगलं विलोक्य राजा मारिदत्तः प्रमोदते ।

४६ अचलापतिरपि स मारि(र)दत्तः प्रतीहारनिवेदितागमनवृत्तस्य मुनिकुमारकयुगलस्य विलोकनात्कुम्भोद्भवोदयात्तोयाशय इव नितरां प्रससाद चेतसि । विभ्रमनिदर्शनाभ्रम इव मुमोच कलुषतां लोचनयोः । जिनेतिहासावगमान्महाभाग इव करुणारसमवाप करणेषु । अभिधानविशेषान्मुमुक्षुरिव समभिरभ्यकाराऽन्तरात्मदिशि । पुनः कोपप्रसादयोरपरनरपालस्मीलापवेतरम्यपहारपरिच्छेदविडम्बितुलादण्डविभ्रमेण भ्रूलतोल्लासनसंभ्रमेणाऽपहाय सभाभ्यन्तराध्वनि अनमथाधम् । मतीव च मनसि विस्मयमानः प्रहर्षोत्कर्षोत्पाभिस्यन्दबिन्दुसंभरीजटिलपक्ष्मपल्लव 'कथं नामैतद्दर्शनादाधाम्नामृतमिव मूर्धमादायवहत्कालुष्यमपि मुहुः प्रशान्तं मे चेतः । चक्षुः पुनः कुलिशकीलितमिव कथं न विषयान्तरमवगाहते । चिरप्रवसितप्रणयिजनावलोकनादिव कथमयमात्मा परमन्तर्मोदते । चित्तमपि चेदं चिरायाचरितपरिचयमिव कथमतीवानन्द

धुमन्थरम्। किं नु खलु नदेतत्र स्यान्मम भागिनेययमलम् । आचक्षणे चाऽपरेद्युरेव रेवतकनामप्रसिद्धात्कुलवृद्धादेतस्य बालकाल एवाश्चर्याय तपश्चर्यापर्यायम्। भवन्ति होमानीन्द्रियाण्यदृष्टपूर्वेष्वपि प्रियजनेषु प्रायेण प्रातम्लपनतेजांसीव रागोल्लणवर्षांसि। यत।

आनन्दबाष्पजलपूरितनेत्रपात्रैः प्रत्यङ्गजातपुलकप्रमवार्पितार्घैः।
चित्तैः प्रमोदमधुपर्ककृतातिथेयैरास्वायते प्रियजनो ननु पूर्वमेव ॥१४७॥

तदलमत्र सा( शा )द्वोदनोरिव आह्यमाह्यविकल्पेन विकल्पजालेन । सफलयामि तावदेनदालापनदोहदादेव हृदयालवालपरिसरे विहितावरोहमौत्सुक्यानोकहम्। ।'

## वैतालिको भूपं मुनिकुमारकयुगलं चाभिनन्दति ।

४७ अत्रावसरे स्वामिन प्रसन्नरस मानसमवमायावसरविलासनामकेन वैतालिकेनेदं वृत्तद्वयमागायते स्म—

'नास्त्येव रिपवो न चाऽपि भवत कश्चिन्निदेशावशः
श्रीरेषा तव देव! या प्रणयिनी तस्यै न कोऽपीर्ष्यति ।
गाढ मुष्टिनिपीडनश्रमभरप्रोद्रान्तधाराजला
सुश्रुत्याहवकेलिदो सहचरीं तत्खड्गयष्टिं भवान् ॥ १४८ ॥
दयार्द्रचित्तैर्मुनिभि समागमान्निसर्गहिंस्रोऽपि जन• प्रशाम्यति ।
आहार्यहिंसामतय• शमोदय भजन्ति यद्देव! तदद्भुतं कुतः ॥ १४९ ॥'

४८ पुनरप्यसौ वैतालिकश्चिरमनिन्द्यामणिभूषणमपि कचमरीचिमेचकितमस्तक, अनवतममपि लोचनरश्मिकवलयितकर्णं, अनलङ्कारमपि कपोलकान्तिकुण्डलितमुखमण्डल, अनावरणमपि वपु प्रभापल्लवदुकूलोत्तरीय, अरण्यप्रेम्णा वदनव्याजेन कमलसर इव भुजच्छद्मना लतारामभिवोरुमिषेण कदलीकाण्डकाननमिव चन्दनलक्ष्मीणाश्चारचनमिव च महानयमान, इन्दुमृगेक्षणद्युतिसपादितमिव कुन्तलेषु, सुरतरुफलकप्रमाधितमिवाऽलिकयो, कामकोदण्डकोटिघटितमिव भ्रूषु, रत्नकरण्डकाकर्णमिव नेत्रेषु, स्मरशरपुङ्खोल्लिखितमिव पक्ष्मसु, रतिक्रीडादर्पणलावण्यविहितमिव नासयो, लक्ष्मीविभ्रमादर्शविनिर्मितमिव कपोलेषु, भारतीसरस्वतीविलासदोलाकृतमिव श्रोत्रेषु, सुधारसामृतकरमण्डलनिर्वर्तितमिवाऽधरयोस्तन्मुनिकुमारकयुगलं विलोक्येदं वृत्तमपाठीन।

"बालद्रुम सस्तलतोद्गनिरान्तमूर्ति-
र्जात कथं पाथि परालरसानुवृत्ते.।

---

१ अत्र 'इत्येव चिन्तयति स्म' इति टीकानुकूल कश्चित्पाठो गलितो भवेत्

आ पाप ! पुष्पशर ! सम्प्रति कस्तवाऽन्य-
केलीरसे यदनयोस्त्वमुपेक्षितोऽसि ॥ १५० ॥

## राजा मारिदत्तः मुनिकुमारकयुगलमुत्तरीयासन उपवेशयति ।

४९ एतच्चासावुपनिशम्य प्रवेष्टहाटककटकप्रदानपुरःसरमेतदाननाम्बुरुहमवलोक्य पुनश्च य समभ्यर्णोत्कीर्णतयाऽवतीर्णेलाऽऽकर्णविदीर्णवदनस्य वेतालचक्रस्य प्रतिकान्तविकटदंष्ट्राचक्रवाल स्वधाराजलनिमग्नसपत्नकीकसकराल इव, प्रतिबिम्बिताधरावलिहजिह्वाप्रतान पराक्रमाकृष्टद्विष्टश्रीविरहाविनोदपरिकल्पितकमलकानन इव, प्रतिमासमागताङ्गारनिभनेत्रनिकरः प्रदर्शितशत्रुक्षत्रक्षयकालोल्काजालावतर इव, पुरुदर्शोदर्शनप्रकाशकेशप्रतिशरीरदुर्दर्शिककल प्रचलिताखिलरिपुलोकग्रसनसमर्थजाठरानल इव, प्रतियातनगताङ्गमङ्गनाभोगतनु समाक्षिप्तविपक्षक्षयदक्षराक्षसक्षेत्र इव, अपि च य स्वस्य स्वामिनो नृपयज्ञावसरेषु निजभुजप्रतापार्जनजनितसान्निध्य इव, सर्वभुवनप्रचारकुतूहलितकीर्तिकुलदेवतासहचरपराक्रमप्रसूतिप्रथमप्रजापतिरिव, दुर्वारवैरिवक्षःस्थलोद्दलनगलद्धारारुधिरोपहारदुर्ललितवीरलक्ष्मीसमाकर्षणमन्त्र इव, सकलजगद्रक्षणक्षमशौर्यसिद्धौषधमाध्यस्थसुधावशीकरणोपदेश इव, समुत्सर्पद्दर्पोद्दामद्विपधरव्याजृम्भमाणस्तम्भाविर्भव-महासाहस इव, प्रतिकूलावनिपालविलासिनीविभ्रमभ्रमरोच्चाटनधूपधूमाडम्बर इव, समाह्वयरसभरितारातिमतिमधुकरीमोहनमहौषधिप्रारम्भ इव, सभूयो साहटु सद्द्विष्टद्विपघटाविघटनविद्वेषभेषजागम इव, कालेयकलङ्कपङ्किलाचारपरस्परासुताचरितचरमाभिचार इव, तमनेकमहासमरानाक्रमतोऽवितरणदेवताविहितबलिविधान वीरश्रीविभ्रमदर्पणनामानमपहसितकृतान्तरसनालीलकरवाल प्रतापद्विपालानस्थानलक्ष्मीलताश्रयशिखरिण कलिकालघुणजर्जरजगत्प्रासादोत्तम्भनस्तम्भादधिजनत्रिदिवतरोर्द्विपदपल्लवदारणाशनिदण्डालीलाकमलमिव कुवलयकल्पयत करात्समृज्य रुद्राणीपादपीठोपकण्ठे दोलायमानमणिकुण्डलकिरणजालपल्लवितगगनारामसुभगमुत्तरलतरोद्दामहस्ताम्भितसमन्ततायायातजनकोलाहल प्रदेशिनीनिर्देशादिष्टनिकटगतराज्ञिकपरिकल्पिते पुरस्तादुत्तरीयासने सन्मुनिकुमारकयुगलमुपावीविशत् ।

## अभयरुच्यभयमत्योर्भूपं प्रति तद्गुणवर्णनपराण्याशीर्वचांसि ।

५० तदपि तस्याधिवार्थनया सपरिकर तयोरुपविश्य "साजयो ससारसुखविमुखभावयोरपीषु प्राणेष्वपरेषु केषुचिन्समर्पितेषु कुतश्चित्काचिदपेक्षाऽस्ति, परमन्यत्रैवस्मात्तनो नि श्रेयसात् । किंत्वात्मनि पुरोभागिन्यपि जने प्रायेण श्रेयसमेव

चिन्तयन्ति तच्चरितचेतसः । भवन्ति च तथाविधेऽपि तस्मिन्ने निसर्गादिहाऽमुत्र चाऽविरुद्धे वर्त्मनि जनिततत्त्वोपदेशाः ।

अज्ञानभावादशुभाशयाद्वा कुर्वीत चेत्कोऽपि जनः खलत्वम् ।
तथापि सद्भिः प्रियमेव चिन्त्यं न मथ्यमानेऽप्यमृते विषं हि ॥ १५१ ॥

*सदाचारोचितमतिर्भूपतिरप्ययमतीवाऽनन्यहेतुविहितविष्टरप्रदानः कृतबहुमानः* संभाषणोत्सुकधिषणः प्रसन्नान्तःकरण इवोपलक्ष्यते । व्यापारयति च प्रकटितप्रणययोरिवाऽऽवयोरानन्दबाष्पोल्बणे मुहुर्मुहुर्वीक्षणे । तत्पर्याप्तमत्रोपेक्षणीयलोकसंमतया वाचंयमतया । [ तथा हि - ]

"पुरः प्रणयभूमीषु फलं यदि समीहसे ।
जगदानन्दनिष्यन्दि वर्षं सूक्तिसुधारसम् " ॥ १५२ ॥

इति च सुभाषितमनुस्मृत्य सौष्ठवमलं सलज्जं च

स्वर्गापवर्गतरुपल्लवसंनिकाशं
धर्मद्वयावनिविहारपथप्रकाशम् ।
उद्धृत्य हस्तयुगलं नृपमवमूचे
तत्तापसार्भकयुगं प्रथितैर्वचोभिः ॥ १५३ ॥ ✓

५१ तत्र मुनिकुमारः—

वर्णाश्रमाणां प्रतिपालयित्रे जगत्त्रयत्रायिपराक्रमाय ।
ददातु देवः स जिनः सदा ते राजन्नशेषाणि मनीषितानि ॥ १५४ ॥

अपि च—

असाविन्द्रः स्वर्गे भवति सुकृती यस्य चरिता-
न्महीभारोद्धारादहिपतिरयं निश्चति सुखम् ।
जगज्जातं चैतद्विजयसमयानन्दति परं
चिरं क्षात्रं तेजस्तदिह जयतादद्भुतविधि ॥ १५५ ॥

कर्पूरद्रुमगर्भधूलिधवलं यत्केतकानां त्विषः
श्वेतिम्ना परिभूय चन्द्रमहसा सार्धं प्रतिस्पर्धते ।
यत्पाकोन्मुखनालिकेरसलिलच्छायावदातं यशः
प्रालेयाचलचूलिकासु भवतो गायन्ति सिद्धाङ्गनाः ॥१५६॥

मातर्गौरि ! फणीशकामिनि ! सति ! त्वं देवि ! हे रोहिणि !
श्रीमत्प्रभु ! वारले ! च सुतनो ! मा मुञ्चताऽऽत्मप्रियान् ।
नो चेदस्य नृपस्य कीर्तिविसराद्दुर्लक्ष्यशुद्धे जने
युष्माकं पतयोऽद्य दुर्लभतरा मन्ये भविष्यन्त्यमी ॥ १५७ ॥

कुवलयदलनीलः कुन्तलानां कलापो
न भवति यदि गौर्याः शंकरे साथ पिङ्गः ।
क्षितिप ! तव यशोभिः संभृतायां त्रिलोक्यां
सरभसरतिकेलिः किं तयोः स्यादिदानीम् ॥ १५८ ॥

इन्दुधवलाऽपि कीर्तिर्धवलितभुवनत्रयाऽपि तव नृपते ! ।
मलिनयति रिपुवधूनां मुखानि यन्नाथ ! तच्चित्रम् ॥ १५९ ॥

भुजगसमसङ्गजनितः सपत्नकुलकालतां प्रयातोऽपि ।
शुभ्रयति भुवनमखिलं पराक्रमस्ते तदाश्चर्यम् ॥ १६० ॥

त्वं चन्द्रस्त्वमसि रविः कुवलयकमलानुरञ्जनात्सत्यम् ।
किं तु यदरातिसद्मसु तमांसि विदधासि तच्चित्रम् ॥ १६१ ॥

कृष्णयति वैरिवर्गं रञ्जयति सतां मनांसि तव देव ! ।
दुर्वर्णयति खलानपि तथापि शुभ्रं यशश्चरितम् ॥ १६२ ॥

भूप ! त्वमेव महतां धुरि वर्णनीयः
सिन्धुर्महानपि भवेल्लघुवृत्तिरेव ।
यत्ते श्रिता य इह ते विनिमग्नवंशाः
क्षोणीभृतस्त्वदनुगास्तु समृद्धवंशाः ॥ १६३ ॥

उत्सर्पद्दर्पवैरिव्रजभुजगकुलाभोगसंकोचमन्त्र
प्रह्वक्षोणीशकल्पद्रुमधरणिसुधासारवर्षाम्बुवाहः ।
आसम्रोदन्वदद्रिद्रवदमरसखीगीतकीर्तिप्रवाहः
कामं कल्पायुरेव प्रतपतु सुचिरं धर्मधामावलोकः ॥ १६४ ॥

पुष्पश्रीर्यस्य ताराः फलममृतरुचिः पत्रलक्ष्मीर्धुनद्याः
कल्लोलाः स्कन्धबन्धो हरगिरिरमराम्भोधिरप्याऽऽलवालः ।
कन्दः शेषश्च शाखाः पुनरखिलदिगाभोग एवैष स स्ता
त्रैलोक्यप्रीतिहेतुः क्षितिप ! तव यशःपादपोऽनल्पकल्पम् ॥१६५॥

५२ मुनिकुमारिका—

अन्यायतिमिरनाशन ! विधुरितजनशरण ! सज्जनानन्द ! ।
नृपवर ! लक्ष्मीवल्लभ ! भवतु चिरं धर्मवृद्धिस्ते ॥ १६६ ॥

सुरगिरिरमरसिन्धुरम्भोनिधिरवनिरनूरुसारथिः
फणिपतिरमृतरोचिरमराश्च दिशो दश यावदम्बरम् ।
तावदशेषभुवनचिन्तामणिचरित परं ! महोत्सवै-
रम्बचरितचन्द्र ! जय जीव विराज चिराय नन्द च ॥१६७॥

उपभुज्य यद्दिशास्ते नपुंसकं धृष्टमपि यशः सर्वाः ।
यामुपभोक्तुं यातं तरलिततारां तदाश्चर्यम् ॥ १६८ ॥
रिपुकुलतिमिरनिकरदावानल ! जगति तनोषि मङ्गलं
दिवि भुवि विदिशि दिशि च विबुधार्चित ! धाम दधासि संततम् ।
भुवनाम्भोजसरसि महतां मत ! विशसि विरोधनाश्रियं
धर्मविनोद ! भूप ! तव भानुमतश्च न किंचिदन्तरम् ॥ १६९ ॥
श्रीरमणीरतिचन्द्रः कीर्तिवधूकेलिकौमुदीचन्द्रः ।
जीयात्क्षितिपतिचन्द्रश्चिराय वसुधाङ्गनाशरच्चन्द्रः ॥ १७० ॥
शत्रुक्षत्रकलत्रनेत्रनलिनप्रालेयकालागमः
क्षोणीरक्षणदक्ष ! दक्षिणनृपक्रीडावतारक्षमः ।
राजन् ! धर्मविलासधाम ! भवतः कीर्त्यङ्गनासङ्गमः
कामं भाति जगत्त्रये सुरवधूदत्तार्घपानक्रमः ॥ १७१ ॥
कमलानन्दनचतुरे चतुरम्भोधिप्रतापगुणविदिते ।
धर्मसखे विजयश्रीर्वसतु करे तव नृपद्युमणे ! ॥ १७२ ॥
धीरश्रीनलिनीप्रबोधनकरस्त्वं धर्मरत्नाकर-
स्त्वं लक्ष्मीकुचकुम्भमण्डनकरस्त्वं त्यागपुण्याकरः ।
भूदेवीवनिताविनोदनकरस्त्वं लोकरक्षाकर
स्त्वं सत्यं जगदेकरामनृपते ! विद्याविलासाकरः ॥१७३॥
चञ्चत्कुन्तलचामरं कलरणत्काञ्चीलयाडम्बरं
भ्रूभङ्गार्पितभावमूरुचरणन्यासासनानन्दितम् ।
खेलत्पाणिपताकमीक्षणपथानीताङ्गहारोत्सवं
नृत्यं च प्रमदारत्नं च नृपतिस्थानं च ते स्तान्मुदे ॥१७४॥

७३. मुनिकुमार —'अनर्थिनः खलु जनस्याऽमृतमपि निर्दिश्यमानं प्रायेण परिकल्पते स्वतापाय। आयतं चोपदेष्टुः पिशाचकिन इवाऽकृतार्थस्य कथाप्रयासः। पार्थिवश्चाऽयमद्याप्याऽऽसेचनकावलोकनयारात्रयो सूक्तसुधारसेषु न तृप्यति। रजस्तमोबहुलेषु च प्राणिषु प्रथमतरमेव धर्मोपदेशः करोति महतीं शिरःशूलव्यथाम्। भवति चाऽऽत्मधीरणाय वक्तुः। तदेनमभ्यन्तरमप्रमर्मरैरेव वचोभिर्ग्लापयामि। नयवेदिनो हि वनगान इव स्वादुकफलप्रलोभनमविदिततत्त्वे पुंसि छन्दानुवर्तनमपि भवत्यात्यामभिमतावाप्तये, इत्यनगत्य पुनरपि तमनन्तापतिमुपश्लोकयितुमुपचक्रमे।

' दन्तितरिपुदैत्यदर्पः प्रतापभरत्रासितखचरलोकेन्द्रः ।
कलिकालजलधिसेतुर्जयतु नृपः समरशौण्डीरः ॥ १७५ ॥

वर्णः ॥

सकलमङ्गलधाम जयकाम कमलालय निखिलनय शौर्यनिगद कदनैकदोदद ।
आनिगममम्ममानवल वैरिकाल जय जीव कामद ॥ १७६ ॥

मात्रा ॥

इति महति भवति किंचिद्वदामि निःशेषतस्तु नो पारयामि ।
यस्तु त्वदीयगुणगरिमधाम सर्वज्ञवचनविषयं हि नाम ॥ १७७ ॥

चतुष्पदी ॥

जय कमलकलशकुलिशाङ्कचरण सकलोपमानरुचिरचितकरण ।
यमवरुणधनदशक्रावतार कल्याणविजय संसारसार ॥ १७८ ॥
एकातपत्रवसुधोचिताङ्ग संग्रामकेलिदयिताभुजङ्ग ।
विद्याविनोदसहजानुराग कीर्तिप्रबन्धभृतभुवनभाग ॥ १७९ ॥
सत्पुरुषरत्नसंग्रहणनिघ्न गुरुदेवमहामुनिशमितविघ्न ।
निखिलार्थितजनकल्पद्रुमाभ धरणिप्रतिपालनपद्मनाभ ॥ १८० ॥
रणवीरवैरिकरिकृतविनोद शौण्डीरशिखामणिवन्द्यपाद ।
गुणघोषमुखरकोदण्डचण्डशरखण्डितरिपुगलनालखण्ड ॥ १८१ ॥
दोर्दण्डदलितपरबलगजेन्द्र निर्व्याजशौर्यतोषितसुरेन्द्र ।
कृतशत्रुकबन्धानर्ततर्ष जय समरमुक्तसुरकुसुमवर्ष ॥ १८२ ॥
निजभुजबलसाधितजगदसाध्य लक्ष्मीकुचनिविडितवाहुमध्य ।
दुर्गाकरपीडनविषमनेत्र सर्वावनीनशेखरचरित्र ॥ १८३ ॥
चतुरुदधितटीवनगीतवर्ण वर्णस्थितिपालन दानकर्ण ।
कर्णप्रदेशविश्रान्तनयन नयनप्ररूपातिसङ्गावसदन ॥ १८४ ॥
सदनाश्रितविषमधरोपकण्ठ कण्ठप्रशस्त हतनीतिकुण्ठ ।
लाटीमुखाब्जसंभोगहंस कर्णाटयुवतिसुरतावतंस ॥ १८५ ॥
अन्ध्रीकुचकुड्मलकृतविलास चोलीनयनोत्पलवनविकास ।
यवनीनितम्बनखपदविदग्ध मलयस्त्रीरतिभरकेलिमुग्ध ।
वनवासियोषिदधरामृतार्ह सिंहलमहिलाननतिलकबर्ह ॥ १८६ ॥

पद्धतिका ॥

इति बुधजनकाम क्रीडितरामः सकलभुवनपतिपूजित।
कृतबुधजनकाम क्षितिपतिरामस्त्वमिह चिरं जय विश्रुत' ॥१८७॥
घत्ता ॥

७४ तथा मुनिकुमारिकाऽपि—
'लक्ष्मीरामानङ्ग सपत्नकुलकालविक्रमोत्तुङ्ग ।
कीर्तिविलासितमङ्गः प्रतापरङ्गधीर जयतु ॥ १८८ ॥
उत्सारितारिसर्प शरणागतनृपतिचित्तसंतर्प ।
लक्ष्मीलला्मकूर्पस्तपतु चिरं नृपतिकन्दर्प ॥ १८९ ॥
भुवनाब्जसरस्तरणिर्धर्मामृतहरणिरदयतमधरणि ।
श्रीरमणीरतिमरणिर्मण्डलिकशिखामणिर्जीयात् ॥ १९० ॥
वर्णः ॥

कुवलयोत्सवचन्द्र नृपतीन्द्र लक्ष्मीवर कीर्तिसरदमृतवृष्टिपङ्कवितबुधवनं।
आभुवनमभिमानधन धैर्यसदन जय विहितसद्वन ॥ १९१ ॥
माना ॥

नृप ! महति भवति किंचिद्गिरामि वक्तुं गुणमखिलं नोत्सरामि।
दीप्तिर्द्युमणेरवनीश ! यत्र का शक्तिः काचमणेर्हि तत्र ॥ १९२ ॥
चतुष्पदी ॥

जय लक्ष्मीकरकमलातपत्र सारस्वतरसनिष्यन्दपात्र ।
धर्मार्थकामसमवृत्तचित्त तीर्थार्थिमनोरथवर्तिवित्त ॥ १९३ ॥
शत्रुस्त्रीनेत्रविधुपलान्तानिश्च्योतचन्द्र रणकेलिकान्त ।
रिपुयुवतिहृदयसूर्यादमशैलविरहानलजन्मद्युमणिलील ॥ १९४ ॥
निलक्षितीशवक्षोब्जकोशविहितश्रीरामासन्निवेश ।
शरणागतनृपतिमनोभिलषितचिन्तामणिनिपुणगुणप्रतीत ॥१९५॥
भुवनत्रयधवलसौधकुम्भ कीर्तिप्रबन्धभास्वद्विजृम्भ ।
सग्रामरङ्गनर्तितकबन्ध वीरश्रीगीतयशःप्रबन्ध ॥ १९६ ॥
यः कोऽपि भवति खलतामुपैति यमवक्त्रयन्त्रवशतां स याति ।
शौण्डीर्याध्यर्पितखेचरेन्द्र दोर्दण्डदलितरिपुकुलकरीन्द्र ॥ १९७ ॥
यस्तव सेवासु विकारमेति तस्मात्प्रागेव श्रीरपैति ।
यस्त्वा हतवृत्तिर्दैव 'नृपतिरायोधनरङ्गमति प्रयाति ॥ १९८ ॥

१ 'धर' मूल २ 'जन' इति टीका

स करेणाऽङ्गाराकर्पणानि विषधरफणमणिभिर्भूषणानि ।
हरिकण्ठसटाभिर्वीजितानि दिक्करटिविषाणैः क्रीडितानि ।
कालेनाऽऽकाशमितानि नाम ननु कर्तुं वाञ्छति धैर्यधाम ॥१९९॥
लक्ष्मीरतिलोल प्रणयिगङ्ग परकीर्तिवधूग्रहणाभिषङ्ग ।
यस्तव परनारीरतिनिवृत्तिमाख्याति यथार्थमसौ न वेत्ति ॥२००॥
नव नासीरोद्धतरेणुरागमञ्जरितकिरणो रविरसितभागः ।
आभाति त्रपुदर्पणसमानबिम्बः क्षितिरमणीरतिनिधान ॥ २०१ ॥
तव सेनाजनसेविततटासु परिशुष्यद्वारिषु निम्नगासु ।
करिधावधरणिसमतोचितानि नूनं भवन्ति नृप ! विस्तृतानि ॥२०२॥
त्वत्कुञ्जरहयरथभटभरेण चूर्णीकृतदुर्गपरम्परेण ।
रिपुविषयेष्वहितारण्यदाव दुर्गत्वमुमाप्रतिमास्थमेव ॥ २०३ ॥
भवतोऽम्बुधिरोधःकाननेषु दिग्विजयव्याजप्रस्थितेषु ।
सैन्येषु द्विषतां दर्शनानि संमुखमायान्ति न गर्जितानि ॥ २०४ ॥
गृहव्याप्यः सलिलधयो नृचन्द्र कुलशैलाः केलिनगा नरेन्द्र ।
लङ्कादिद्वीपाधिधिसमर्थभूतः प्रतिवेशनिभः कृतार्थ ॥ २०५ ॥
दिक्कुम्भिस्तम्भाः सो[1]च्छ्रयस्य जाताः प्रशस्तिपट्टा जयस्य ।
यस्येत्थं तव महिमा महीन किमसाध्यं तस्य गुणैरहीन ॥ २०६ ॥
गार्जि जहीहि भोजावनीश चेदीश विशाश्मवशं प्रदेशम् ।
अश्मन्तक वेश्म विहाय याहि पल्लव लघु केलीरसमर्पं हि ॥ २०७ ॥
चोलेश जलधिमुल्लङ्घ्य तिष्ठ पाण्ड्य स्वयमुज्झ हृतप्रतिष्ठ ।
वेरम पर्यट मलयोपकण्ठमागच्छत नो चेत्पादपीठम् ॥ २०८ ॥
ईशस्य निषेवितुमाशु सदनि तव दूतैरेवं देव वचांसि ।
कथिते सति स क्षितिपः किमस्ति यः सेवाविधिषु न ते चकास्ति॥२०९॥
केरलमहिलामुखकमलहंस वङ्गीवनिताश्रवणावतंस ।
चोलश्रीकुचकुड्मलविनोद पल्लवरमणीकृतविरहखेद ॥ २१० ॥
कुन्तलकान्तालकभङ्गनिरत मलयाङ्गनाङ्गनवदाननिरत ।
यवनाङ्गनावलोकनविमुग्ध कर्णाटयुवतिनर्तनविदग्ध ।
कुब्जाङ्गललनाकुचललित कम्बोजपुरन्ध्रीतिलकपद ॥ २११ ॥
पद्धतिः ॥

---

१ 'सोच्छ्रयस्य' इति मुद्रितपुस्तके.

नृपनृपतीश्वर भूरमणीश्वर यदिदमखिलगुणसंश्रय ।
उक्तं किंचित्त्वत्स्तुतिकृतिचित्तचित्रं न महोदय ॥ २१२ ॥

घत्ता ॥

यैरिन्दिरामन्दिर सुन्दरेन्द्र श्रीराजकन्दर्प नतैर्नरेन्द्रैः ।
दृष्टोऽसि दृष्टाः क्षितिप ! क्षितीशाः कामैर्न कैस्त्वमवकारिभिस्ते ॥२१३॥

हस्तागतैस्त्रिदिवलोकगतैस्तदीय-
रन्ध्रान्तरालनिरतैश्च सपत्नजालैः ।
शौर्ये जगत्त्रयपुरीप्रथिते तवेत्थं
को नाम विक्रमपराक्रमवानिहाऽस्तु ॥ २१ ॥

## मारिदत्तोऽभयरुच्यभयमती तद्वृत्तान्तं पृच्छति ।

५५. सोऽपि राजा तयोरेवमभिनन्दतोर्वाचि वपुषि चाऽनन्यजनसाधारणीं मधुरतां निर्वर्ण्य "क्वेदं करतलस्पर्शेनाऽपि हार्यसौकुमार्यं वपुः ? क्व चाऽयं वयःपरिणामकठोरकरणैरपि महासत्त्वाधिकरणैर्निर्वोढुमशक्यारम्भस्तपःप्रारम्भः ? क्वेमानि सकलचक्रवर्तिपदनिवेदनपिशुनानि कङ्केलिपल्लवच्छविषु करचरणतलेषु लक्षणानि ? क्व चाऽयमादित एवाजन्मभिक्षाकममभ्रमः प्रश्रमः ? अहो आश्चर्यम् ! कथमाभ्यामसत्यता नीतोऽयं प्रत्यङ्गफलनिर्देशः ? किञ्च, नीलमणिसखानि कुन्तलेषु, शिशिरकरपरार्धतां भालयोः, सरङ्गरेखाश्रितांशु, स्वस्मसुखयं लोचनयुगलयोः, कौस्तुभोत्पत्तिं कपोलेषु, अमृतधाराप्रवाहं नासयोः, गम्भीरत्वमालापेषु, प्रवालपल्लवोल्लासं रदनच्छदयोः सुधारसप्रभा स्मितेषु, प्रचेतःपाशान्भवणविषये, कम्बुकान्ति कण्ठयोः, वीचिविलम्बितानि बाहासु, लक्ष्मीचिह्नानि करतलेषु, रमावेश्मशोभामुरःस्थलयोः, वेत्रवेल्लितानि वलिषु, आवर्तविभ्रमं नाभिदेशयोः, पृथुत्वं नितम्बदेशे[2], वृत्तिगुणनिर्माणमूरुषु, मुक्ताफलप्रसूतिं चरणनखेषु, लावण्यरसनिर्भरत्वं चाऽस्य मिथुनस्य तनौ, अनेन सृजता प्रजापतिना नूनं सपरिवारः पारावार एव परं दारिद्र्यमानिन्ये । अपि च,

यत्राऽमृतेन स्वसजन्म विभाति विश्वं
यत्रेन्दुना सह गतिं भजतेऽम्बुजश्रीः ।
लावण्यमेव मधुरत्वमुपैति यत्र
तद्वर्णयेत किमिव रूपमयं जनोऽस्य " ॥ २१५ ॥ ✓

१ 'प्रवाहमालापेषु, गम्भीरत्व नासयोः' इत्येव पाठ्टीकानुसारी ।
२ 'दिशि' इति पाठ्टीकानुसारी ।

इति क्षणं च प्रविचिन्त्य भूपः सप्रश्रयं तन्मिथुनं बभाषे।
"को नाम देशो भवतोः प्रसूत्यै किं वा कुलं यत्र बभूव जन्म॥२१६॥
अज्ञातसंसारसुखं च बाल्ये जातं कुतः प्रव्रजनाय चेतः।
एतन्मम प्रार्थनतोऽभिधेयं सन्तो हि साधुष्वनुकूलवाचः" ॥२१७॥

¹५६ मुनिकुमार —

नाऽन्यत्र दीक्षाग्रहणान्मुनीनां संकीर्तनं तत्रितयस्य युक्तम्।
तथापि तत्कर्तुमहं यतिष्ये भवन्ति भव्येषु हि पक्षपाताः ॥२१८॥

ध्यानज्योतिरपास्ततामसचयः स्फारस्फुरत्केवल-
ज्ञानाम्भोधितटैकदेशविलसत्त्रैलोक्यवेलाचलः।
आनम्रेन्द्रशिखण्डमण्डनभवत्पादद्वयाम्भोरुहः
श्रीनाथ! प्रथितान्वयस्य भवतो भूयाज्जिनः श्रेयसे॥२१९॥

सोऽयमाशार्पितयशा महेन्द्रामरमान्यधीः।
देयात्ते संततानन्दं वस्त्वभीष्टं जिनाधिपः ॥ २२० ॥

इति सकलतार्किकलोकचूडामणेः श्रीमन्नेमिदेवभगवतः शिष्येण सद्योऽनवद्यगद्यपद्यविद्याधरचक्रवर्तिशिखण्डमण्डनीभवच्चरणकमलेन श्रीसोमदेवसूरिणा विरचिते यशोधरमहाराजचरिते यशस्तिलकापरनाम्नि महाकाव्ये कथावतारो नाम प्रथम आश्वासः ॥



१ 'वदानः' इति मूलपुस्तके।

11093

# चन्द्रिका The Sanskrit Commentary by श्रुतसागरसूरि
# &
# English Explanatory Notes etc.

*N. B.—In the following pages all the technical terms of Jain religion and others are explained, difficult lines are translated, double meaning expressions are cleared and obscure words or phrases, wherever necessary, are commented upon. The sanskrit commentary of* श्रुतसागरसूरि *is generally quoted in full for the prescribed portion where it is found to be sufficient to elucidate the meaning. It is expected that these notes with the glossary at the end and summary given in the introduction will guide the reader easily through the prescribed portion of text.*

**यशस्तिलकम्**-It has another name यशोधरमहाराजचरितम् wherein the full account of the life of the king यशोधर is given in detail through out the whole book. His future life account also is described therein. **चम्पूः**—A kind of elaborate and highly artificial composition in which the same subject is continued through alterations in prose and verse.

Following the custom of ancient Sanskrit writers, **श्रीसोमदेवसूरि** begins his work by performing what is called मङ्गल. A मङ्गल [ (१) मङ्गं सुखं समुत्पद्यते इति प्रभुगुणस्तोत्रं मङ्गलं 'मङ्गं लातीति' मङ्गलमिति व्युत्पत्तेः । (२) मलं गालयतीति मङ्गलमिति वा । ] usually consists of a salutation (वन्दनम्) or beredlction. The performance of मङ्गल was deemed necessary for the removal of obstacles and for safe completion of the work undertaken.

## Page 1.

1. **कुवलयानन्दप्रसाधितमहोदय**.—Read **श्रुतसागर**-कुवलयं महीमण्डलं तस्य आनन्दाय प्रसाधितः सम्पादितः महान् अत्यन्तमपरिमितः उदयः येन तथोक्तः (चन्द्रप्रभः ।) the other reading कुवलयानन्दप्रमादितमहोदयः does not seem so happy as the meaning of the word प्रमादित, which is प्रमत्तीकृत, becomes far-fatched ore. **महोदयः**—is also the name

of a city कान्यकुब्ज (कनोज), the kingdom of महेन्द्रपालदेव II **चन्द्रप्रभः**- He is the 8th तीर्थंकर out of the 24 Ones, who revise the truth on earth This verse has double meaning, the words कुवलयानन्द महोदय: and देव go to the Lord चन्द्रप्रभ and महेन्द्रपालदेव II **श्रियम्**- Read **श्रुतसागर**- अभ्युदयनि:श्रेयसलक्षणोपलक्षिता लक्ष्मीम्। **श्रीमान्** Read **श्रुतसागर**-बाह्याभ्यन्तरसमवशरणकेवलज्ञानादिलक्ष्मीर्विद्यते यस्य स भवति श्रीमान्।

लक्ष्मी-श्री

| ( बाह्य ) | ( अभ्यन्तर ) |
|---|---|
| समवशरण, etc | केवलज्ञान, etc. |

समवशरण—Hall of Audience or where the Lords preach the truth This Audience-Hall is specially prepared by the इन्द्र at the instance of the Lord of Heaven When the Tirthankera or Arhat attains omniscience in this world by destroying the most powerful of karmic bondages and becomes endowed with knowledge, power and bliss of infinite magnitude, the Arhat Parmes'thin or Tirthankar Paramdeva tours the country propounding the **dharma** and defining the path of salvation, so that others may have benefit of liberation from transmigration For this purpose is constructed such an elaborate moving Audience-Hall which serves both as a vehical carrying the Tirthankar from place to place and an Audience Hall accommodating the devout followers eager to listen to the truth propounded by Him Wherever this Audience-Hall takes place in any particular locality, there is a reign of universal peace and harmony Animals instinctively antogonists to one another show a tendency to peace and goodwill to one another The land within the radius of 12 K'osas becomes fertile and devoid of any natural calamity such as famine, etc. There are twelve special parts assigned for twelve kinds of Assemblees. The

twelve parts of the Audience-Hall are gradually decorated by the following Assemblees —(1) केवली, The Omniscient Lord (2) गणधर, Apostle (3) सुर, Gods of Heaven (4) ज्योतिषीसुरकामिनी, Damsels of the stellar gods (5) भौमनारी, The ladies of the earth (6) नागिणी, A female Naga (7) स्वर्गनारी, Heavenly ladies (8) ज्योतिषीसुर, Steller gods (9) भौमदेव, The kings on earth (10) भुवनवासी नागदेव, The Nagas of the Residential gods (11) मनुष्य, Men (12) केसरी, The lions At the centre exists the Lord Jaina केवल्ज्ञान—Perfect knowledge or the omniscience of the perfect being or पुरुषोत्तम. According to Jainism the knowledge or understanding is particularly considered to be of five kinds, though it is *commonly one* (1) मतिज्ञान is *knowledge obtained* through the normal means of sense perception and memory based upon the same This is common inheritance of all persons (2) श्रुतज्ञान is knowledge obtained through testimony of books This corresponds to knowledge by description *It is acquired by study Therefore it is possessed by only the* learned men (3) अवधिज्ञान is the direct understanding of the nature of objects circumscribed by द्रव्य, क्षेत्र, काल and भाव (4) मन पर्ययज्ञान refers to a peculiar kind of telepathic knowledge acquired by persons of certain stage of spiritual development *It is a means by which knowledge of alien minds is obtained* (5) केवलज्ञान is the perfect knowledge **सन्दर्शनात्**—Read **श्रुतसागर**– (१) अवलोकनमानात् (२) सम्यक्त्वात् सम्यक्त्व or सम्यग्दर्शन– Right belief It plays a very important part in Jaina सिद्धांत It is considered to be the first and foremost among the *three constituents which taken together form the path to* liberation of सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः । तत्त्वार्थसूत्र Chapter I Sûtra I सम्यग्दर्शन means Right belief, सम्यग्ज्ञान means Right knowledge and सम्यक्चारित्र means Right conduct Of these three, right belief is the basis upon which the other two

rests It is an essensial preliminary to right knowledge It is the cause and right knowledge is the effect Right knowledge always implies it Similarly, right conduct is preceded and caused by right knowledge and implies both right knowledge and right belief These are otherwise called the three gems (रत्नत्रय) in Jaina works **यस्योन्मीलति केवले**—Read **श्रुतसागर**—यस्य भगवतश्चन्द्रप्रभस्य केवले केवलज्ञान उन्मीलति प्रादुर्भवति। When the perfect knowledge is attained by the mundane soul he knows all the substances with all their past present and future modifications at a time as clear as the lines on palms of hands For this reason, the three worlds become the crystal-clear to Him, the Omnicient Lord **यस्याऽङ्घ्रि भोगडम्बरः**—Read **श्रुतसागर**—यस्य जिनेन्द्रस्य अङ्घ्रिनखनक्षत्रविजृम्भाय नमज्जगत्त्रयपाल-कुन्तलाभोगडम्बरो नमस्यते अङ्घ्रिनखा एव नक्षत्राणि अतिनिर्मलत्वात् तथा विजृम्भाय प्रसृत्यै प्रसरणाय नमन्तो नम्रीभवन्तो ये जगत्त्रयपाला धरणेन्द्रनरेन्द्रचन्द्रादयस्तेषां कुन्तलाभोगडम्बरः कुन्तलविस्तारादोपो नमस्यते नभ इव आचरति चमत्करोति। जिन—He is called अर्हत् also This state of life is gained by destroying 4 घातियाकर्मs which are as under —(१) ज्ञानावरणीय (२) दर्शनावरणीय (३) मोहनीय (४) अन्तराय In Jaina scripture, generally there are eight Karmas of which the aforesaid are four घातियाकर्मs and the other four अघातियकर्मs which are as follows —वेदनीय, आयु, नाम and गोत्र Every mundane soul is embodied and exists in combination with the above mentioned eight Karmas When the soul destroyes the 4 घातियाकर्मs, it attains the state of Jina or अर्हत् and enjoys the Infinite Quaternary ( अनन्तचतुष्टय ), viz, Infine Conation, Infinite knowledge, Infinite power and Infinite Bliss **प्रहर्षितविष्टपाधीशाकिरीटोदयकोटिषु**—Read **श्रुतसागर**–नम्रा-नता ये जगत्त्रयविष्टपाधीशास्तेषां किरीटानि मुकुटानि तान्येव उदय उदयाचलस्तस्य कोटिषु अग्रेषु। **नखांशुजृम्भकराभोगकेसरम्**—Read **श्रुतसागर**–नखाना उज्जृम्भा प्रसरणशीला ये करा किरणास्तेषामाभोग आटोप स एव केसराणि किञ्जल्का यस्मिन् तत्पदीनम् ( पद्मद्वयम् ।) **नम्रामर . शार्यते**—Read

**श्रुतसागर**—प्रह्वीभूता या अमराश्च शचीप्रभृतयो देवाङ्गनास्तासां नेत्राण्येव नीरजानि जलभूतकमलानि तान्यथोक्तास्तासु । **वाङ्मनोदैवसिद्धीनाम्**—Read **श्रुतसागर**—सिद्धिशब्द प्रत्येकमभिसम्बध्यते । तेनाऽयमर्थः । वाक्सिद्धिर्मन सिद्धि दैवसिद्धिस्तासां तथोक्तानां ईशते स्वामिनो भवन्ति । **विश्वदृश्वैकमूर्तये**—Read **श्रुतसागर** - विश्वदृश्वनी एका अद्वितीया केवलज्ञानलक्षणा मूर्ति स्वरूप यस्य स तथोक्तस्तस्मै ।

•

## Page 2.

**जिनबोधपयोधये**-*Read* **श्रुतसागर**—केवलज्ञान स एव पयोधि समुद्र । अपर्यन्तत्वात् गुणरत्नसम्भृतत्वाच्च । स तथोक्तस्तस्मै । **वेलाचलकुलायते**-Read **श्रुतसागर**-वेलाचला समुद्रनिकटतिताडनपर्वतास्तेषां कुल समूहो वेलाचलकुल वेलाचलकुलमिवाचरति वेलाचलकुलायते । **मतेरित्यादि**-Read **श्रुतसागर**-तद्गणधरदेवादीनां श्रुतकेवलिनां प्रसिद्धमक्षरमय ज्योति श्रुतज्ञानमिहाऽस्मिन् यशस्तिलकनाम्नि ग्रन्थारम्भे जयतात् सर्वोत्कर्षेण वर्तताम् । तस्मै अस्माक नमस्कार इत्यर्थ । तत्किम् । यत् श्रुतज्ञानमक्षरमय ज्योतिर्ज्ञानमाश्रित्य सवितात्र ग्रन्थतोऽर्थतश्च आश्रित्य अनुशील्य पुन पुनरभ्यस्य अय योगिनां प्रत्यक्ष आत्मा जीवो मनस आत्मन अपरमद्वितीय चक्षुर्लोचन सृजति । अयमात्मा ( किन्तु ) निखिलज्ञेयविषयश्च भवति लोकालोकस्वरूपज्ञापको भवति । अपर कथभूतमक्षरमय ज्योति । स्फुरत्तत्त्व स्फुरन्ति चमत्कुर्वन्ति तत्त्वानि ज्ञानादिद्रव्याणि यस्मिन् ज्योतिषि तत्तथोक्तम् । कै. कृत्वा स्फुरत्तत्त्वम् । निवर्तैर्नरकादिपर्यायै । कथभूतैर्निवर्तै । अत्यन्तै पर्यन्तरहितै । नन्तैरित्यर्थ. । अपर कथभूतैर्निवर्तै. । भरित पूरित सम्भृरित भुवनस्य त्रैलोक्यस्य आभोगविभवो विस्तारविभवस्वरूपो यैस्ते भरितभवनाभोगविभवास्तैस्तथोक्तै । द्रव्याणां पर्यायाणां च स्वरूपकमित्यर्थ । अतिशयालङ्कार । जात्यलङ्कार । It is already stated that the scriptural knowledge is one of the five kinds of knowledge It is preceded by sensitive knowledge of श्रुत मतिपूर्वं द्व्यनेकद्वादशभेदम् । तत्त्वार्थसूत्र chapter I, Sutra 20 Again, broadly, the *scriptural knowledge itself is of two kinds* अङ्गप्रविष्ट, *contained* in the Angas and अङ्गबाह्य, out of the Angas [ There are twelve Angas ] The अङ्गप्रविष्ट श्रुतज्ञान relates to the manual containing aphoristic rules, divided in twelve kinds of Angas by the Apostles on hearing the Omniscient Lords The अङ्गबाह्य श्रुतज्ञान is of many kinds It is the composition by the saints after the

Apostles and contains the description on different topics in the twelve अगs The above-mentioned twelve Angas are as follows —(1) आचाराङ्ग contains a full exposition of the rules of conduct of ascetics (2) सूत्रकृताङ्ग contains a detailed description of knowledge, humility, etc of religious rites and difference between the rites of one s own religion and those of the religion of others (3) स्थानाङ्ग contains an exposition of one or more numerical points of view of Jiva (soul), Pudgal (matter) and the other Dravyas (4) समवायाङ्ग gives an account of the similarities that arise from the point of view of द्रव्य substance, क्षेत्र place, काल time and भाव quality (5) व्याख्याप्रज्ञप्ति contains an account of the 6000 questions with answers which the chief disciples put to the Omniscient Lords (6) ज्ञातृधर्मकथाङ्ग is otherwise called धर्मकथाङ्ग It contains an exposition in details of the nature, etc of the nine पदार्थs catagories, which are जीव, अजीव, आस्रव, बंध, संवर, निर्जरा, मोक्ष, पुण्य and पाप ( For detail explanation, see Introduction, ) as well as the answers to questions of Ganadharas put to the Lords (7) उपासकाध्ययनाङ्ग deals with in details the elevan stages of householder s life, the views of chastity etc, and other rules of conduct for the house-holders as well as aphorisms and lectures on the same (8) अन्तकृद्दशाङ्ग relates to an account in details of ten ascetics, who in the period of each of the 24 Tirthankars, undergo very strict torture of asceticism and set themselves free from the shackles of Karma finally (9) अनुत्तरौपपादिकदशाङ्ग gives an account of the ten great ascetics who in the period of each Tirthankar, practised asceticism of a very high type and in virtue of that took birth in the five अनुत्तरविमानs of heavens such as विजय, वैजयन्त, जयन्त, अपराजित and सर्वार्थसिद्धि (10) प्रश्नव्याकरणाङ्ग contains instructions as to how to reply questions relating to the part and future time, gain and loss, happiness and misery,

life and death, good and evil, etc. ( 11 ) विपाकसूत्राङ्ग deals with the bondage, operation and existence of Karmas and their intensity and mildness from the point of view of द्रव्य, क्षेत्र, काल and भाव (12) दृष्टिप्रवादाङ्ग gives the description of 363 philosophical views other than Jainism and refutes them in details श्रुतकेवलिन्‌s–The saints who know the scriptures thoroughly They arrange the twelve Angas and 14 पूर्वs The names of the 14 पूर्वs are as under .—( 1 ) उत्पादपूर्व, (2) आग्रायणीय, (3) वीर्यानुवाद, (4) अस्तिनास्तिप्रवाद, (5) ज्ञानप्रवाद, (6) सत्यप्रवाद, (7) आत्मप्रवाद, (8) कर्मप्रवाद, (9) प्रत्याख्यानपूर्व, (10) विद्यानुवाद, (11) कल्याणवाद, (12) प्राणावाद, (13) क्रियाविशाल, (14) त्रिलोकबिन्दुसार ( For detail explanation see गोम्मटसार etc. ) गणधर—The direct pupil of the Omniscient Lord He has of all kinds of knowledge except केवलज्ञान द्रव्य and पर्याय —The term Dravya means the real that is fluent or changing It denotes any existence which has the important characteristic of persistence through change. Paryaya is another technical term which means mode of existence In Jaina philosophy, there are six द्रव्यs such as जीव, पुद्गल, धर्म, अधर्म, काल and आकाश ( For detail explanation, see Introduction ) लोकालोक—लोक्यन्ते जीवादयो यस्मिन् स लोक । लोक is that part of the Universe in which the afore-said six द्रव्यs are found and अलोक is the name assigned to that part wherefrom the above six द्रव्यs are absent. From the philosophical point of view, लोक and अलोक are two divisions of space The space, Akasa, is considered to be objectively real in Jaina system It is a substance which is infinite and non-atomistic, that is, partless Its function is to find room for all things though being of nature of ' place ', it does not stand in need of itself It is again, self-subsisting entity or can not be created or destroyed by any process of regression or progression The consituent elements of the world are the infinite number of जीवs, the

infinite physical objects, the principles of motion and rest and space and time Of these, space contains the other five. The space which is co-extensive with these objects is लोकाकाश. But this is only a part of the real space. Beyond the Loka, there is अलोकाकाश or अनन्ताकाश This अनन्ताकाश is a pure space There are no objects animate or inanimate in this Infinite Beyond Not a tiny molecule of matter or a stray Jiva would step beyond the limits of Loka This Loka, again, is divided into three regions अधोलोक, मध्यलोक and ऊर्ध्वलोक अधोलोक—The nether world has seven earths ( lying parallel to each other and with an intervening space separating one from the other Beginning from the earth which we inhabit, these earth are situated, each one) lower than the other Each one is surrounded and supported by the three atmospheres, namely (1) gross air atmosphere, (2) Vapour atmosphere and (3) Thin air atmosphere मध्यलोक —The central region or the Temporal world includes, according to Jaina scripture, a large number of vast 'continents' and 'seas', such as जम्बूद्वीप, the लवणसमुद्र, and the like, lying one after another in an unbroken succession ऊर्ध्वलोक—The celestial region is consisted of sixteen heavens, on eight storeys, where pain and misery are the least known Above these are higher celestial regions - graiveyakas, ग्रैवेयक, anudishâs, अनुदिश and anuttaras अनुत्तर where all but perfect hapiness prevail , above these is the holy Siddha Sila which is the abode of the Gods. These three regions constitute the Loka and beyond that is अलोक, the pure space तत्त्व-There are seven principles, according to Jaina system, such as जीव soul, अजीव, non-soul , आस्रव, inflow (of Karmic matter into the soul) बन्ध, bondage ( of soul by Karmic matter ) संवर, stoppage ( of inflow Karmic matter into the soul ). निर्जरा, sheding ( of Karmic matter by the soul ) and मोक्ष, Liberation ( of soul from matter )

cf जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् । (तत्त्वार्थसूत्र Chapter I, Sūtra 4) (For the detail explanation, see Introduction). **सर्वज्ञकल्पै:**—Read **श्रुतसागर**—सर्वज्ञादीपदपरिसमाप्तिं सर्वज्ञसमानैरित्यर्थ: । **वैदग्ध्यगीन:**—A modern poet **प्रत्यादरम्**—Read **श्रुतसागर**—आदरपूर्वकं यथा भवति एवम् । with the close application **कविताकान्ता:**—Read **श्रुतसागर**—नवीनकाव्यकरणे मनोहरा । **अवसरोचिता:**-Read **श्रुतसागर**-प्रस्तावयोग्या । **सर्वशास्त्रान्ता:**—Read **श्रुतसागर**—अवसानपर्यन्ता: सर्व शास्त्रसन्निधिन्यमत्र्व्याकरणच्छन्दोऽलङ्कारसिद्धान्तस्यादिलादय: । **वर्णनोदीर्णवर्णम्**-Having a long description with bombastic words **वाच्योचित परिचयं**—Having accumulation of the appropriate expressed meaning which is derived by means of अभिधा (See मम्मट's काव्यप्रकाश). **यदव्युत्पत्त्यै . च स्यात्**—Which will be for learning of all subjects in the world for oneself as well as for others The author here states the peculiarity of the काव्य. According to him, the काव्य should open before the readers a, new vista of learnings which will cover all subjects in the Universe It should not confine to only one or two branches of knowledge but should deal with each and every section of the knowledge **आजन्मसमभ्यस्तादित्यादि**—Read **श्रुतसागर**-मम सोमदेवसूरे: सम्बन्धिन्या अस्या प्रत्यक्षीभूताया सकाशात् मतिसुरभेर्बुद्धिधेनुकाया: इद प्रत्यक्षीभूत सूक्तिपय यशस्तिलककाव्यक्षीरं सुकृतिना पुण्यै कृत्वा अभवत् । मतिसुरभे सूक्तिपय काव्य क्षीरमपि कस्मादभवत् । आजन्मसमभ्यस्तात् जन्मपर्यन्तमास्वादितात् तर्कात् प्रमा णशास्त्रात् । तृणादिव घासखर्णादिव । सूक्तिक्षीर बभूवित्यर्थ: । उपमारूपकालङ्कारादय सकरालङ्कार इत्यर्थ । **लता इव**—Read **श्रुतसागर**-उत्प्रेक्षिता लता इव यस्य वृक्षस्य इहयौ लता शाखा वर्तन्ते स वृक्षो महान् भविष्यतीति । **वागित्यादि**—Read **श्रुतसागर**-काव्यकरणे काव्यरचने तावत् वाक् स्यान्तश्च शब्दो विलोक्यते । अपर अर्थो वाच्य च विलोक्यते तत्र कविसामर्थ्यं द्विविधम् । तथा चोक्तम्-सस्कारोत्थ स्वभावोत्थ सामर्थ्य द्विविध कवे: । तत्र शास्त्राश्रय पूर्वमन्यदात्मोत्थसश्रयम् ॥ एत-त्रय काव्यरचनाया सामग्र्य विलोक्यते । तत्र त्रिषु सामग्र्येषु मध्ये द्वय शब्दार्थ-लक्षण सामग्र्य सर्वेषामेव वक्तृणा कवीना सम साधारणं वर्तते । यत सर्वेऽपि कवय: स्यान्तत्यान्तशब्दवन्तो भवन्ति । स्वस्वसिद्धान्तानुसारेण अर्थं वाच्य जानन्ति । पर तृतीय कविसामर्थ्यलक्षण सामग्र्य भिन्नशक्तिकम् ।

**लोक इत्यादि**—Read **श्रुतसागर**—लोको व्याकरणशास्त्रम् । युक्ति प्रमाणशास्त्रम्, कला लिखितपठितादिशब्दा सप्ततिसख्या, छन्दो मात्रावर्णभेदेन द्विविधम्, अलङ्कारा शब्दालङ्कारा अर्थालङ्काराश्च समयागमा जिनजैमिनिकपिलकणचरचार्वाकशाक्यानां सिद्धान्ता सर्वसाधारणा सद्भि स्मृता कथिता प्रतिपादिता । क इव । तीर्थमार्ग इव । यथा तीर्थमार्ग गङ्गादिमार्ग ब्राह्मणा-श्चलन्ति, चाण्डाला अपि गच्छन्ति, नास्ति तत्र दोष । तथा व्याकरणादिशास्त्र जैनेन्द्रादिक सर्वैरपि पच्यते । न तत्र दोष कोऽप्यस्ति । उपमालकार । **विगाहते**—Read **श्रुतसागर**—प्रवेश न करोति । **स्त्रीवृन्दमिव .. मन**—Read **श्रुतसागर**—म दस्य नपुसकस्य स्त्रीवृन्दमिव । यथा स्त्रीवृन्द भोक्तु ( नपुसक ) न शक्नोति तथा च अनुभवितु न शक्नोति । **मध्यस्थानां च मौनाय**—The other reading wh ch is मध्यस्थाना न मौनाय does not seem to be so happy The निर्णयसागर ed tion gives this l ne with the word न and the Sanskrit commentary by श्रुतसागर on it is explained as under —मध्यस्थाना मिश्रधर्माणा मौनाय न भविष्यति । तेऽपीद पठिष्यन्ति इत्यर्थ ।) But I for one select च instead of न wh ch gives better meaning than the latter The readers should choose either of the two as they please **सुकविकथा .. बुधानाम्**—Read **श्रुतसागर**—मद्विधोक्तिषु अह सामदेवसूरि आचार्य विध प्रकारो येषा ते मद्विधा मद्विधानामुक्तय शास्त्राणि मद्विधोक्तयस्तासु । बुधानां रुचिरभिलाष । श्रद्धाति यावत् । भवतु सजायताम् । कथभूताना बुधाना सुकविकथामाधुर्यप्रबन्धसेवा तिवृद्धजाड्यानाम् शोभना कवय व्यासश्रीहर्षमाघकालिदासादयस्तथा कथा शास्त्राणि तत्र योऽसौ माधुर्यप्रबन्ध कर्णामृतप्रायरचना तस्या सेवा आस्वादन तया अतिवृद्ध अतिप्रकर्षमागत जाड्य जडत्व येषा ते तथोक्तास्तेषाम् । मद्विधोक्तिषु कस्मिन् । पिचुमन्दकन्दलीष्विव निम्बतरुपल्लवेष्विव । यथा मधुरमास्वादयन् पुमान् कण्ठे जाड्यवान् भवति, तद्विनाशार्थं निम्बपत्राणि कटुकान्यपि भक्षयति, तद्भक्षणे तस्य कण्ठजडता विनश्यति, तथेद **यशस्तिलककाव्यमधीयानाना** मूर्खत्व विनश्यतीति भाव । **किन्तु किञ्चित् स्त्रिया**—Read **श्रुतसागर**—अस्मिन् काव्ये किञ्चित् पूर्व अनिर्वचनीय अन्यत् अपर सुख परमानन्दलक्षण वर्तते । कथभूत सुखम् स्वसवेद्य आत्मनैवाऽनुभवनीयम् । स्त्रिया इव । यथा भुज्यमानाया यत्सुख तत् उक्तिगोचर वचनगोचर पर चरणान्यासनदियामसङ्गात सुख न भवति । किन्तु अन्यत् स्वसवेद्य मतसमधानुभरण सुख भवति ॥ उपमालकार । **यात्यपूर्व मपूर्वनाम्**—Read

**श्रुतसागर**–अपूर्वं अर्थं अप्रसिद्धः अर्थः सपूर्वता याति अनुभूतमिव चमत्करोति । **कान्ताजनेष्विव**—Read **श्रुतसागर**—*यथा कान्ताजनेषु एकान्तेन वक्रोक्ति*. कुटिलवचनं प्रीतये न भवति स्वभावाख्यानं चाऽतिनोऽतया स्वाभिप्रायार्पणं च प्रीतये न भवति किन्तु द्वयं प्रीतये भवति, किञ्चित् वक्रोक्तिः किञ्चित् स्वभावाख्यानं एतत् *द्वयं मिश्रं प्रीतये भवति शृङ्गाररसप्रधानम्* । **प्राज्यभोज्यविधि ....देहिनि**—Read **श्रुतसागर**—धामचारिणि देहिनि *प्राज्यभोज्यविधि*' प्रचुरान्नभोजनविधान क स्यात् । अपि तु न कश्चिदपि स्यादित्यर्थं ॥ **अङ्गनावद्गिरोऽगण्या· हात्**—Read **श्रुतसागर**—गिरो वाचः प्रायेण बहुलतया अन्यपरिग्रहात् विद्वज्जनस्वी-कारादगण्या माननीया भवन्ति । एतत् शास्त्रं एते विद्वांस पठन्ति, इदं शास्त्रं विशिष्ट *भवतीति काव्यं मानयन्ति । किंवत् । अङ्गनावत् । एषा स्त्री अनेन राज्ञा परिगृहीता* वर्तते तर्हि एषा स्त्री अतीव रुचिरा भविष्यतीति मन्यते ।

## Page 3

**आत्मस्थितेर्वस्तु .... मुधाऽनुबन्ध**—Read **श्रुतसागर**—आत्म-स्थितेर्निजस्वरूपानुसारेण वस्तु काव्यादिकं विचारणीयम् । जातु कदाचित् जात्यन्तर समाश्रयेण अपरवस्तु परवस्त्वाश्रयेण न विचारणीयमित्यर्थं । न यथा तर्कशास्त्रपरीक्षा-विषये व्याकरणशास्त्रपरीक्षा कर्तव्या व्याकरणशास्त्रविषये तर्कशास्त्रपरीक्षा न कर्तव्या । किं तर्हि, तर्केण तर्कस्य व्याकरणेन व्याकरणस्य, काव्येन काव्यस्य परीक्षा कर्तव्या । यथा अयं तर्कः समीचीनो न भवति काव्यस्याऽसत्त्वे । इदं काव्यं समीचीनं न भवति तर्कस्याऽसत्त्वे । *दुर्वर्णवर्णविधौ रूप्यपरीक्षाविधाने सुवर्णवर्णस्याऽनुबन्ध परीक्षा* *कुर्वाना विद्वज्जनाना मुधा व्यर्थैव भवति । दृष्टान्तालङ्कार*' ॥ **अयमित्यादि**—Read **श्रुतसागर**—अत्र कवि मत्कविर्भवति । एष प्रत्यक्षीभूत कविर्न भवति । कतिभि-र्विद्वद्भि अत्र अस्मिन् काव्यशास्त्रे हेतुप्रयुक्तिर्हेतुप्रयोगो विचारो विधेया किम् । अपि तु न विधेयेत्यर्थं । यतः यस्मात् कारणात् वागर्थयो रूपनिरूपणाय स्वरूपविज्ञानाय श्रोत्र श्रुतिर्मनश्चित्तं च समर्थं वर्तेते । यथासंख्यालङ्कार ॥

2 **चतुर्वर्गमार्गणोपकरणप्रसूत**—(The country) which was the source of means of investigation for ends of human life There are four kinds of पुरुषार्थs *(ends of human life) as under*— (1) Religious merit, (2) wealth, (3) enjoyment and (4) liberation (मोक्ष) **सुरलोकमनोरथाविधेय**.—Read **श्रुतसागर**— सुर *लोकस्य स्वर्गस्य मनोरथा अभिलाषा अविधेया अकर्तव्या यस्मिन् देशे स तथोक्त* ।

( mental impression ), as the Buddhists would maintain **कामिनीनितम्ब इव करभोरवः**-Read **श्रुतसागर**-करभैरुभैःउरवो गरिष्ठा । क इव । कामिनीनितम्ब इव । यथा कामिनीनां कटिपश्चाद्भागाः करभोरव करभस्येव उरुस्थेव उरवः सक्थीनि येषां नितम्बानां सक्थीनि ते करभोरवः । **अजसअनितविस्ताराः**-Read **श्रुतसागर** -अजमञ्जनितविस्तारा अजैश्छागै सञ्जनित सम्यक् प्रणीतो विस्तारो येषु ते अजसञ्जनितविस्तारा'। का इव। श्रुतय इव। यथा श्रुतयो वेदा अजेन ब्रह्मणा सञ्जनितविस्तारा भवन्ति । **श्रमणा इव जातरूप धारिण** —Read **श्रुतसागर**—जातरूपधारिण सुवर्णधारिण । क इव । श्रमणा इव । यथा श्रमणा जातरूपधारिणो भवन्ति । श्रमण is a peculiar name applied to a Jaina ascetic He is described to be a naked The Jainas particularly Digambaras regard the abandonment of all clothing as the *Sine quo non* of the monastic order **बृहस्पतिनीतय इवाऽदेवमातृका**'—Read **श्रुतसागर**—अदेवमातृका नदी-जलनिष्पन्नसस्योपजीविन । का इव । बृहस्पतिनीतय इव । यथा बृहस्पतिनीतय-श्चार्वाकशास्त्राणि देव सर्वज्ञादिकमपि न मन्यन्ते । The Charvakism is considered to be the materialism in India It is in its first stage, called in question of all kinds of knowledge, immediate as well as mediate, and all evidence, perception as well inference It denied the authority of even the Vedas Since it was, in its original stage i. e Barhaspatya, without any constructive element and without any positive theory to propound, it was negative and destructive In its later stage this school preached "Eat, drink and be merry, for tomorrow you may die ' According to Charvakism, there is no such thing as God, the supreme author and Governor of the world, an Omniscient spirit Religion is as harmful as opium Prayer is the hope of men who are weak, without the will power to do anything, worship is insincere egotism to save oneself from the tortures of hell and prophets are the greatest liars among men Religion is the invention of individuals desirous of deceiving their fellow men in order to further their own selfish interest In short,

3 In this para there are double meaning expressions **गोमण्डलयन्त** —The pun is on the word गोमण्डल such as, Read **श्रुतसागर—गोमण्डलयन्तः** (1) पृथ्वीवलयसयुक्ता (महानुपतय।) (2) गाव सुरभय मण्डला श्रुनगम्ने विद्यन्ते येषु ते (ग्रामा।) **महिषीसमाकुला**.—Here the pun is on the word महिषी such as (1) queen, (2) She-buffalo **भरतप्रयोगा इव सगन्धर्वाः**—Just as the science of symphony is inclusive of the celestial musicions, similarly the villages (also) were full of the horses **गन्धर्व**—(1) A celestial musician, (2) A Horse According to Jaina scripture गन्धर्व is one of the Peripatetic Gods There are four classes of gods such as (1) भवनवासी Residential, (2) व्यंतर Peripatetic, (3) ज्योतिष्क Stellar, (4) वैमानिक Heavenly **सुगतागमा इवाऽविकल्पप्रधाना** --Read **श्रुतसागर**—अवीना कल्या समूहा प्रधाना मुख्या येषु ग्रामेषु। क इव। सुगतागमा इव बौद्धशास्त्राणीव। यथा सुगतामा अनिरूप्यमानस्वर्गपुण्यपापप्रक्रमयश्च भवन्ति। तथा च पश्यति—नाह नैव परा न कर्मनिरि प्रायेण च भ कश्चिद्धोक्ता प्रत्य न तफल्म्य च वदेदित्थ स बौद्धो यदि। कस्मादेव तप समुद्यतमनाश्चैत्यादिक वन्दत किं वा तन तथाऽस्ति केवलमसौ धूर्तैर्जडो वञ्चित ॥ There are two broad Systems of Buddhism (1) शून्यवाद, (2) विज्ञानवाद According to नैरात्म्यवाद the notion of 'I and 'mine' is the cause of bondage, and as such it must be shaken off Where there is the notion of the Self, there arises also the notion of the other than the-Self, and owing to this division of the Self and the other-than-the-Self, there springs up feelings of attachment and aversion from which all evils arise In order to root out desire (काम) which is the real cause of sufferings in the world attempts are made in the doctrine of the Buddha to show that there is neither the subject nor the object of desire Viewing things in this light, the propounders of the doctrine of शून्यवाद, one of the sytstems of Buddhism, declare that anything external or internal that appears to us existing is, in fact unreal lke the imaginary town of the sky Thus the denial of

everything, animate or inanimate, is held in this system to be the real cause of cessation of desire whereupon liberation follows as a natural consequence

* The other *विज्ञानवाद is said to be based on the Upanishadas* It postulates the existence of *chitta* or mind only and utterly denies all external things which are, according to it, just like the phantoms created in a dream The common idea lying at *the root of these two welknown schools of Buddhism is thus.-* Impurities or passions, such as desire, obstruct the attainment of liberation, and as such are regarded as a cover. They are due to the conception or notion of Self, and so they must *disappear only when one really understands that in fact there* is nothing that can be called soul Then follows liberation Man is steeped in ignorance about the things he sees around him, for the things he sees are not in fact what they appear to *him, they being only the vibrations or transformations of chitta* Such ignorance is also an obstruction, and, like darkness, covers the knowledge, (ज्ञेय) the real truth, and is known to be a 'cover of knowledge When this cover is completely removed by means of right things of view, one becomes Omniscient The advocates of Vijnanavada closely compare their doctrine of विज्ञानवाद with the Upanishadic philosophy Brahmavada or Atmavāda they say, is in fact Vijñanavada Somehow or other, when all these three, Brahman, Atman and Vijnana, are regarded as identical. Thus to say all this is Brahman or Atman amounts to saying all this is Vijnana, or in other words all this is a vivarta, illusory manifestation or parinama *i e* transformation of Brahman or Vijnana It is apparent from the above that in both the Vedantic and Buddhistic schools of thoughts, the external world has in fact no reality, and though it appears to us, this appearance itself is due to *avidya* according to the Vedantins, or to Vasana

साख्या इव । यथा साख्या समाश्रितप्रकृतयो भवन्ति समाश्रिता प्रधानापरनामा बहु-धानापरनामा चतुर्विंशतिभेदभिन्ना सत्त्वरजस्तम-प्रकृतिः ज्ञानवती चतुर्विंशतिभेदभिन्ना यैस्ते । The Samkhya system recognizes two ultimate entities nature and spirit—neither of which can be derived from the other. The former is termed Prakriti and the latter Purus Prakriti is the name which it gives to the principle or entity out of which is evolved the objective universe in its infinite diversity This primal entity is not directly perceived and its existence has only to be inferred Prakrati or mul-prakriti, as it is sometimes designated to indicate that it is the First Cause of the Universe, is thus one and complex, and its complexity is the result of its being constituted of three factors, each of which is described as a गुण. The term गुण means here a component factor or a constituent of Prakriti and not a quality, for the Sāṁkhya does not admit the distinction between substance, and attribute The three गुणs are named *Sattva*, *rajas*, and *tamas* These three constituents, though essentially distinct in their nature, are conceived as interdependent so that they can never be separated from one another It means that they are not mechanically placed to-gether but reciprocally involve one another and form a unity in trinity That is, they not only co-exist but also cohere Each of them stands for a distinct aspect of physical reality · roughly, *Sattva*, signifies what is pure and fine, *rajas*, whatever is active, and *tamas*, what is stolid and offers resistance From the standpoint of the experiencing mind, they are also described as being of the nature respectively of pleasure, pain and bewilderment, for they give rise to those feelings From it seems that the गुणs are not merely distinct but are also antagonistic in their nature The antagonism however, is not such as to preclude their acting to-gether, and their harmonious action is illustrated by the exa-

*mple of lamp-flame the result of co operation between the* wick, oil and fire The advocates of this system maintain that the physical universe is an orderly whole which has its own laws to obey and there is no ultimate contradiction in it, though it may consist of opposing elements They also stretct the point stating that it is not only Prakrati that consists of these three गुण्s, but everything that emnates from it is also similarly constituted, for the underlying principle of the doctrine of this school is that effects are essentially identical with their material cause Though only three in number, the गुण्s thus really stand for a manifold of distinctions In later Samkhya, *we find that their number is infinite and that they are only* arranged on the basis of their likeness and differences Prakrati is not only considered to be complex and all-pervasive in this system, but it is described as undergoing change perpetually

The conception of Purusa in the Samkhya system makes him passive spectator and therefore Purusa is inactive His activities are entirely secondary and derived inasmuch as he is associated with Prakriti, of which his body is a modification. It is this relationship that is explained metaphorically by the Samkhya school through the story of the lame man on the back *of the blind—the Purusa guiding the path, while being carried* by the blind Prakrati **ब्रह्मवाना इव प्रपञ्चितारामाः**–Read **श्रुतसागर**–प्रपञ्चितारामा प्रपञ्चिता विस्तार नीता आरामा उपवनानि येषु ते तथोक्ता । क इव । *ब्रह्मवादा इव। यथा ब्रह्मवादा वेदान्तवादा प्रपञ्चिता विस्तार नीत आरामो अविद्या येषु* ब्रह्मवादेषु ते प्रपञ्चितारामा । Brahmavada means Atmavada which amounts to saying that all this is Vijnanan or in other words, all *this is transformation of Brahman or Vijnana It denies all* external things which are, according to it, just like the panthoms created in a dream **महायोगिन इव क्षेत्रज्ञप्रतिष्ठाः**–Read **श्रुतसागर**–क्षेत्रज्ञप्रतिष्ठा क्षेत्रज्ञाना हलाजीवाना प्रतिष्ठा नामा येषु त तथोक्ता । क इव ।

महायोगिन इव यथा महायोगिनो गौतमस्वामिप्रभृतय क्षेत्रज्ञप्रतिश्रा भवन्ति आत्मनि तल्लीना भवन्ति । **क्षेत्रज्ञ**—means a husbandman as well as a sage one who has spiritual knowledge It conveys four meanings – (1) One who knows the three worlds (2) One who knows the योनि, the place of birth or origin. (3) One who knows the female disposition which is impure (4) One who knows that the mundane soul has the form according to his body in which he lives

**Page 5.**

**सकलजगन्निर्माणप्रदेशा इव सर्वजीविन** -Read **श्रुतसागर**—सर्वजीविन सर्वे राजतापसपक्षादिभिर्जीव्यन्ते उपजीव्यन्ते सर्वजीविन । क इव। सकलजगन्निर्माणप्रदेशा इव । यथा सकलजगन्निर्माणप्रदेशा सकलस्य समस्तस्य जगतोऽधोमध्योर्ध्वनिर्माणप्रदेशा निष्पादनप्रदेशा सर्वजीविनश्चातुर्गतिकप्राणिवर्गसहिता भवन्ति । In this concrete world so organized and associated with the body Jivas are of four main groups according to four *gatis* ( destinations). *Deva* or divine beings, *naras* or human beings, *narl as* or beings relating to hell and *tiryal s* or the lower animals and plant world These four beings constitute Samsara which is the result of Karmic bondage according to which a particular Jiva will be borne in any one of the *gatis*. Salvation consists in escaping from the Samsric cycle of births and deaths in any one of these four *gatis*

4 This para is inadvertently printed in a prose style It is purely a verse which should be read as under —

विकचकर्णोत्पलस्पर्धिनरलेक्षणा केलितालवृन्तकनकमयकङ्कणा ।
मरसनखरानिविच्छुरितभुजमण्डला काञ्चिकोलाभवशादर्शितोरुस्थला ॥
स्वैरसजल्पनस्मेरबिम्बाधरा कर्णकण्डूमिषोद्दलितकक्षान्तरा ।
पृथुनितम्बभरास्वल्पहृद्दहगतिविक्रमा सहनस्फारररसभरितमुखविभ्रमा ॥
पीनकुचकुम्भदर्पत्रुटत्कञ्चुका शालिवप्रेषु यान्त्य क्षण गोपिका ।
पान्थसार्थेषु नयनोत्सव कुर्वत यत्र ताप पुनश्चिरमुपाचिन्वते ॥

Th s is the description of husbandwomen n the barley f eld in the country निवन्त लेचणाs whose tremulous eyes were vy ng with the full blown lotus placed on ear as an ear ornament चेल्लिताल वङ्कणा —Whose golden bangles were j ngling due to the flapp ng (of hands at the t me of) pastime or play *सरस मण्डला* whose arms were coated with the line of fresh scars **पृथुनितम्ब - विभ्रमा** —Read **श्रुतसागर**—पृथवो विस्तीर्णा ये नितम्बा कटिपश्चाद्भागास्तद्भरेण स्खलन्त प्रस्खलन्त प्रस्खलन कुर्वतो लग्नगतिविभ्रमा ललितगमनपाश्चपा यासा तास्तथोक्ता । **सहजशृङ्गार - विभ्रमा** —Read **श्रुतसागर**—सहज स्वाभाविक योऽसौ शृङ्गाररस तेन भरिता पुष्टि नीता मुखविभ्रमा वक्त्रकमलहासा यासा तास्तथोक्ता । मुखविभ्रमा —Any female conquett sh of mouth calculated to excite amorous sensation

5 **वपत्र** **वन्धुरा** —*Read* **श्रुतसागर**—*उच्यते वपनाणि ननु निशीभूतानि चत्त्र रहितानि यानि क्षेत्राणि सस्याधिकरणानि तेषु सजाता उत्पन्ना* या सस्यसम्पत्ति वणसम्पत् तया बन्धुरा मनोहरा यास्तास्तथोक्ता ।

6 Here the descr pt on of temples of J na in the c ty राजपुर is g ven in a poet cal manner तत्र–In that यौधेय country **नद्विलासिनी** **रुचिभि** —Read **श्रुतसागर**—तस्य राजपुरस्य या विलासिन्य कमनीयकामिन्यस्तासा विलासा कटाक्षविक्षेपलक्षणा लोचनचलनानि तेभ्यो लालसानि अत्याभिलाषाणि मानसानि चित्तानि येषा ते तथोक्तानाम् । *स्वर्ग निश्चलोचनत्वात् । अमरकुमारकाणा अमराणा कुमारास्तेषा अनालम्बे नभास* आधाररहित आकाशे अवतरणमार्गचिह्नाय लक्षणाय उचिता योग्या रुचिर्दीप्तिर्येषा चैत्यालयाना त तथाकाश्चैस्तथोक्ते । The dea s that when the beaut ful younger gods who were ardently longing for the amorous past me of the beautiful women in the city राजपुर, were com ng down from the heaven the brill ant splendour of the city-temples served as a marks of the path for the r advent n *the sky* **अटनितटानि** **-पद्मरिमि** *—Read* **श्रुतसागर**—*अन्नीना* कन्नीना तटानि अन्नितटानि तषु निविण उपविष्ट प्रामान्त सह जन्तिना ये ।तकन्दरगोकरा प्रथयतक धरा केसरावल्भितप्रदन्ता कराग्नः गजाना विपा मणिचन्विता ये पद्मानानामपा समापे मचारण गमनेन नविता मीतो जीवमिद्दानया

विम्बो योऽसौ चन्द्रमृग शशाङ्कहरिणस्तस्य विलोचनवत् रुचि शोभा येषां तानि च तानि विकचकुवलयानि विकसितोत्पलानि तेषां उपहार पूजा विद्यते येषां ते उपचारिण तै । The underlying idea is that the full-blown lotuses with which the worship was offered to the Gods in the city temples were resembling the eyes of the deers of the moon who were frightened at the sight of lifeless lions made up of jewels that were set in on the upper parts of the temples **अनवरतविहरद्विहाय** . पल्लवे.—Read **श्रुतसागर**—अनवरतमहर्निश विहरन्त पर्यटन्तो ये विहायश्चरा विद्याधरास्तेषा चनानि समूहास्तेषु सन्ति उत्पन्ना योऽसौ कामिनीनां कपोलेषु श्रमस्वेद खेदसम्बन्धी स्वेदस्तस्यापनोदो विनाशस्तदर्थं मन्दस्य दा (अ)खल्पचलना पताकाञ्चलपल्लवा येषु तैस्तथात्तै । The gist is this that the perspiration collected on the cheeks of the ladies of the semi-divine beings flying in groups by air in the sky was driven away by the flags hoisted on the tops of temples in the city राजपुर **रचितापराध** **युवतिभि**—Read **श्रुतसागर**—रचित प्रकल्पिता योऽसावपराधस्तेन विरुद्धा कोप प्राप्ता या अङ्गना कमनीयकामिन्यस्तासा चरणेषु चरणकमलेषु आनता नम्रीभूता ये विलिप्यका देशास्तेषां वनीपका अब्राह्मणभट्टा । स्तुतिपाठका इत्यर्थ । तेषा निकाय समूहस्तेन कृत विहित कैतव धूर्तत्व तेन यदव लोकन निरीक्षण तेन कुतूहलिता पूर्वमाश्चर्यं प्राप्ता पश्चाच्चिन्ताक्रान्ता गता पश्चात् स्मिता मनाग् हसित । सिद्धानामणिमादिगुणोपेतानां देवविशेषाणां युवतय कमनीय कामिन्यो यत्र ते सिद्धयुवतयस्तैस्तथोक्तै । **अनेकध्वज** **बन्धिभि**—Read **श्रुतसागर**—अनेका बहुला ये ध्वजस्तम्भास्तेषा स्तम्भका स्तम्भोपरि लघुस्तम्भा स्तासूलम्बिता बद्धा ये मणिमुकुरा रत्नादर्शास्तेषु मुखावलोकनस्य वक्त्रबिम्बनिरीक्षणस्य या केलि क्रीडा तया कल्प मनोहरा ये दिवौकसो देवास्तेषां स्खलितयाणि भग्नवेगानि यानि विमानवाहनानि तेषा सम्बाधा कण्मनुबध्नन्त्यनुकुर्वन्तीत्येवंशीलास्ते अनुबन्धिन- स्तैस्तथोक्तै । There were small columns in the huge flag-staffs which were fastened on the tops of the temples As the speed of the aeroplanes carrying the superhuman beings was made slow due to the impediment caused by the height of the temples the ladies of the heavenly beings in the aeroplanes were naturally used to see their faces in the jewelled mirrors that were in those small columns

## Page 6

**अप्रत्नरत्नचय . . . . . सिचयोल्लोचैः**—Read **श्रुतसागर**— अप्रत्नानि नूतनानि यानि रत्नानि तेषां चयः समूहस्तेन निचिता जटिता ये काञ्चनकलशाः कनककुम्भास्तेभ्यो निसरन्ति प्रसरन्ति निर्गच्छन्ति यानि अविरलानि किरणजालानि अंशुसमूहास्तैर्जनिता उत्पादिता अन्तरिक्षलक्ष्मीनिवासस्य आकाशस्य श्रीगृहस्य विचित्र-सिचयोल्लोचाः पञ्चवर्णवस्त्रचन्द्रोपका यैस्तैस्तथोक्तैः । The rays coming forth from the golden jars decorated on the temples were creating, as they spread, the notion of the canopy of the variegated garment ( सिचयोल्लोच ) belonging to the abode of the Goddess Laxmi **अमृतकर ... यष्टिभि**—Read **श्रुतसागर**-अमृतकरश्चन्द्रस्तस्यातप उद्द्योतस्तस्य स्पर्शनोच्छोपनेन द्रवन्तश्च्योतन्तो ये चन्द्रकान्ताः शशाङ्ककान्तमणयस्ताभिर्निवृत्तानि प्रणालानि जलनिर्गमद्वाराणि तेभ्य उच्छलन्ति उत्पतन्ति यानि जलजालकानि जलसमूहास्तेषामासारो वेगवद्वर्षस्तेन सिच्यमाना आप्यायमाना वियद्विहारिणीनां विद्याधरीणां विरहस्य विप्रलम्भस्य यत् वैश्वानरकर्म अग्निप्रवेशस्तेन मर्मरा अङ्गारीभूताः शरीरयष्ट्योऽङ्गयष्ट्यो येषु चैत्यालयेषु ते तथोक्तास्तैः । The water of the moonstones, oozing on account of the moon rays, sprinkled the murmuring bodies of the separated damsels of the semi-gods pining away in desertion and thus lessened their sorrows for a while **अहिमधाम . . . . दीपैः**—Read **श्रुतसागर**—अहिमधामा श्रीसूर्यस्तस्य भूष्णव किरणास्तै सन्धुक्षितः प्रज्वलितो यो दिनकृत्कान्तविशिलापरिपर्यन्तः सूर्यकान्तमण्युपरितनभूमिमुपरि तन स्फुरन्त उच्छलन्तो ये कृशानुकणा अग्निस्फुलिङ्गास्तैर्विकास्यमानाः प्रज्वाल्य-माना अमरमुनीनां सप्तऋषीणां मध्याह्नदीपा येषु चैत्यालयेषु ते तथोक्तास्तैः । The central idea is that the seven Rishis used to kindle their mid-day *lights with the sparks of fire arising from the upper portions of the sun-stones which were illuminated by the rays of the sun* The seven Rishis according to Hindu Puran are as follows,— गौतम, भारद्वाज, विश्वामित्र, जमदग्नि, वसिष्ठ, कश्यप and अत्रि According to Mahābharat, the names of the seven Rishis differ as follows — मरीचि, अत्रि, अङ्गिरस, पुलह, क्रतु, पुलस्त्य and वसिष्ठ While मनु calls these sages प्रजापतिs or progenitors of mankind and gives ten

names, three more being added to the latter list *i e* दक्ष or प्रचेतस भृगु and नारद In astronomy the seven Rishis form the constellation of the "Great Bear, **उपरितनतलचल .. नाशने** – Read **श्रुतसागर**—उपरितनतलमुपरिभूमिस्तन चलन्त पर्यटन्तो ये प्रचलाकि-चालका मयूरशिरास्तेभ्यो भयात् पलायमाना शीघ्र नश्यन्तो जयविजयपुर्यो अन्तरिक्षनगरविशेषयोर्ये पन्नाशना नागा यत्र येषु ते तथोक्तै । जय and विजय are the names of the two cities in the sky The Hindu mythology belives that there is the intermediate region called अन्तर्लोक between heaven and earth and regards it as a distinct world The main idea of the passage is that as the peacocks were moving here and there on the surface of the upper parts of the *temples, the serpents happened to be in the cities* जय *and* विजय in the sky were running out of fear **उपान्तस्तूपनिपतत्पारा डम्बरै** —Read **श्रुतसागर**—उपान्तेषु समीपेषु ये स्तूपा कृत्रिमपर्वतास्तेषु निपतन्तो निर्गच्छन्तो य पारापतपतङ्गा कलरवपक्षिणस्तेषा पङ्क्तिभि श्रेणिभि *पुनरुक्ता द्विगुणीकृता ये धूपधूमास्तेषामाडम्बर आटोपो यत्र ते तथोक्तै* । पारेवता हि कपोता धूसरा भवन्ति । **इतस्ततोऽविदूरतर .. रचनै** —Read **श्रुतसागर** – इतस्ततो यत्रतत्राविदूरतरे निकटे चरन्त पर्यटन्तो ये चाषा भासपक्षिण । करण्डपर-नामानो जलकाका इति यावत् । तेषा छदा पत्राणि तेभ्यो मूर्च्छन्ती निर्गच्छन्ती अतुच्छा प्रचुरा या छाया कान्तिस्तया आच्छाद्यमाना उह्यमाना मेचकरचना कृष्ण-मणिघटना येषु ते तथोक्तै । This is an example of तद्गुण अलंकार or the Borrower This is the figure of speech in which a thing gives up its own quality and assumes that of another which is possessed of more powerful qual ty owing to their association Here the intensive lustre of diver birds feathers is overpowering the dark or blue coloured gem (मेचक) **अनिलव्यपेप्रङ्खोलन विधिभि** —Read **श्रुतसागर**—अनिलो वातस्तस्य लय सश्लेषण विलासो वा तेन यत्प्रङ्खोलन कम्पन तस्मात् कल मधुर, यथा भवत्येव क्वणन्त्य शब्दायमाना किङ्किण्य क्षुद्रघण्टिकास्तासा जालानि समूहास्तैर्वाचाला शब्दवन्तो ये पालिध्वजाश्चिह्न-पताकास्तेषा ध्वानै शब्दैरारब्ध प्रकल्पितो विद्याधरवधूभिर्विचरत्कमनीयकामिनी-भिरुद्देशितविधिर्वर्तन चित्त ध्यान येषु ते तथोक्तै । The blowing wind

caused the small bells to produce the jingling noise. This tinkling of the bells again made the flags noisy This sound produced by the noisy flags, hoisted on the temples, served as the beating time to the maidens of Vidyādhharas while dancing etc **स्फटिकोत्कीर्णकुत्कीलेरिव ज्योतिर्लोकस्य**—Read **श्रुतसागर**—ज्योतिर्लोकस्य चन्द्रसूर्यग्रहतारकालोकस्य स्फटिकैरुत्कीर्णाग्निकच्छिन्ना ये नीडापर्वता-स्तैरिव। According to Jaina religion the stellar gods form one of the four groups of the celestial beings The classes of these stellars are as under ,—(1) The sun (2) The moon (3) The planets (4) The constellations and (5) The scattered stars cf ज्योतिष्काः सूर्याचन्द्रमसौ ग्रहनक्षत्रप्रकीर्णकतारकाश्च। तत्त्वार्थसूत्र Chapter IV, Sutra 12 The stellars begin at a height of 790 yojanas ( each of 2000 K'osas ) from the level of the earth on which we are. The lowest are the stars Ten yojanas above them are the suns Eighty yojanas above the suns are the moons Four yojanas above the moons are twenty-seven constellations Again four yojanas above the con stellations is the planet Mercury, the Budha , above three yojanas is the planet Venus, the Sukra , above three yojanas the planet Jupiter, the Vrhaspati, above three yojanas the planet Mars the Mangala , and above three yojanas the planet Saturn, the Sanais'chara Thus up to 900 yojanas from the earth level upwards are found the stellar orders of celestial beings The yojana here is of 2000 K'osas **समन्तादुत्सर्प ... परम्पराम्**—Read **श्रुतसागर**—समन्तात्सर्वतोऽवसर्पतोर्ध्वं गच्छता अनेकानि बहुलानि माणिक्यानि रत्नानि तेषां रुचयो दीप्तयस्तासां तरङ्गप्रसरेण कल्लोलनिसरेण कृत्वा विनेयजनानां भव्यप्राणिनां त्रिदशनिदमनिवेशारोहणाय स्वर्गस्थानचटनाय सोपानपरम्परामारोहणश्रेणीं परिकल्पयद्भिरिव रचयद्भिरिव। The wave-like splendours proceeding from the emeralds were appearing as if the stair cases for the ascending the heavens for the souls capable of attaining libera-tion ( विनेयजन ) **महाभागभवने** —Read **श्रुतसागर**—पुरुषमन्दिरैश्च

The city Rajpur was not only richly decorated by the beautiful temples of the Lord Jinas but also by the palatial buildings of the distinguished persons ( महाभागभवनै ) **उत्तुङ्गतोरण भवने** – Read **श्रुतसागर**—उत्तुङ्गानि अत्युन्नतानि यानि तोरणानि द्वाराणि तेषां मणीना मरीचय किरणास्तै पिञ्जरितानि पीतीकृतानि अमरभवनानि देवविमानानि यैस्तानि तथोक्तै ।

## Page 7

8 The description of the God Cupid now begins The main sentence is मनसिजमहागजनन्नो निजाराधनमरसेव्यपुत्सवदिनसेपु परपुरपुरन्ध्रीणामर्हणामु परिचय न चकार । **अनवरत चारै** —Read **श्रुतसागर**—अनवरत निरन्तर प्रमाधित उपढौकित अलक्चामराणा कुन्तलप्रकीर्ण कानामुपचार सवा यैस्त तथा तै । This is the adjective belonging to the ladies of the city Rajpur **अलिकाङ्गणरङ्ग कोटिभि** —Read **श्रुतसागर**–अलिकाङ्गणरङ्ग ललाटपट्टरङ्गरतनभूमिस्तत्र शृङ्गारिता सत्नीकृता भ्रूलताकोट्यश्चिल्लीकोट्या यैस्त तथा तै । **विस्फारित** –according to **श्रुतसागर** the meaning of this word is प्रचुरीकृतो विशषण पावित । **प्रकटित राजिभि** —Read **श्रुतसागर**—चतोराम कामदत्तस्य निरामो नसतिस्त तन्निमित्त यत् शासन लप्य तस्य समाभिनी या ममीलिखितलिपिभिरान्जनलिपि ताभरविन्यासस्तया स्पधमाना तदुपमा धरन्तो या रोमराजी रोमावलि चतोराम निरामशासनमसालिखितलिपिस्पर्धमानरोमराजि । प्रकटिता लोचनगोचरीकृता चेतोरामनिरामशासनमसीलिखितलिपिस्पर्धमानरोमराजि यैस्ते तथा तै । The lines of hair on the abdomen which were corresponding to the lines of letters written in different kinds of collyrium were visible on account of the most thin garment worn by the city-ladies **चरणनख विरचनै** Read **श्रुतसागर**—चरणाना नखा पुनर्भवास्तै सम्पादिता निष्पादिता रते सम्भागस्य यद्रहस्य गौप्यतत्त्व तदुद्द्योतन रत्नदीपशिखा विरचना माणिक्यप्रदीपकल्पनास्थायैस्ते तथा तै ।

9 **प्रचण्डदोर्दण्ड प्रकाण्डस्य**—Read **श्रुतसागर**—प्रचण्डो बलवत्तरो योऽसौ दोर्दण्डो बाहुदण्डस्तस्य ( मण्डलीतस्या ) मण्डनमलङ्करणभूतो योऽसौ मण्डलाग्र खड्गाग्रस्तेन खण्डितो द्विधाकृतोऽरातिप्रकाण्ड शत्रुस्कन्धप्रदेश । प्रावेलय । येन स तथा तस्य ।

10. **प्रतिपन्नपितृवन . त्वात्** On account of the elder persons having been dead or resorted to the forest. **नर्मसचिवपुत्रै**-along with the young pleasure-companions **तार्तीयीकेन वयसा**-तृतीयमेव तार्तीयीकं तेन तार्तीयीकेन by the youthful age **परिकरविधिः**—Read **श्रुतसागर**—शिरस्त्राणतारत्राणोरस्त्राणादिविधि । **उभयकटकन्दरा ..... कारिणा**—Read **श्रुतसागर**—उभयौ ( उभौ ) वामदक्षिणौ कटौ गण्डौ तयोः कन्दरो मध्यप्रदेशस्तनान्योन्याभिमुखनिलीने परस्परमभिमुखमुपविष्टे ये मद शौर्यश्रीश्च तयोर्वेणिदण्डौ सयुतकुन्तलकलापौ तावनुकरोति तत्सदृशो भवतीत्येवंशीलः स तथोक्तस्तेन ( दानद्रवेण )। From here onwards the poet gives us the description of the intoxicated elephants with whom the king मारिदत्त used to play as a recreation The ichor of the elephants in rut is compared in a fanciful manner to the dark hairs of the मद and शौर्यश्री which are supposed to be residing face to face in the hollows of the both sides of the temples of the elephants. **अनूरुसारथि ... स्यदनं**—Read **श्रुतसागर**—अनूरुरुरुणनामा सारथिः ( सूतो ) यस्य सः । श्रीसूर्यस्तस्य यो रथो व्योमयान तस्योन्माथाय पातनाय मिथः परस्परमुद्दस्ता क्षिप्ता ये हस्ता. शुण्डादण्डास्तेषा निष्ठुरो निर्दयो योऽसौ निष्ठ्यूतवमथुस्त्रीर्णवमन स एव पाथो जल तस्य प्रवाहेण पूरेण प्लावितानि क्षालितानि सुरसदनानि देवविमानानि यैस्ते तथा तैः । The trunks of the elephants which were raised up with a view to causing the chariot of the sun to fall down ejected from them the water by which the abodes of the celestial beings were overflowed

**Page 8.**

**प्रत्यक्पुर पक्ष . विघट्टनैः**—Read **श्रुतसागर**—प्रत्यक् पश्चाद्भागः, पुरः अग्रभाग, पक्षौ वामदक्षिणपार्श्वं प्रत्यक्पुरःपक्षास्तेषां प्रविभ्रमण तस्य प्रारम्भो रचनादिकर्म तेन विजृम्भितः प्रसृतः योऽसौ प्रभञ्जनो वायुस्तेन जनितमुत्पादितं कुलशैलशिखराणा कुलपर्वतशृङ्गाणां विघटन स्फोटनं यैस्ते तथा ते । कुलशैला — कुलशैलशिखराणा कुलपर्वतशृङ्गाणां विघट्टन स्फोटनं यैस्ते तथा तै । These are the six principal mountains as per Jaina Faith which are supposed to exist in the first Continent called जम्बूद्वीप Their names are —हिमवन्, महाहिमवन्, निषध, नील, रुक्मि and शिखरि cf तद्विभाजिनः पूर्वापरायता हिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिणो वर्षधरपर्वता ।

तत्त्वार्थसूत्र chapter III, Sûtra II. These mountains run East to West. While in Hindu religion number is raised to seven and the *names also are different from the above list as follows :*— महेन्द्र, मलय, सह्य, शुक्तिमान, ऋक्ष, विन्ध्य and पारियात्र. **समस्तसत्त्वसंमर्द ..पुरुषैः**—Read **श्रुतसागर**—समस्तसत्त्वानां सर्वजीवानां संमर्दनं चूर्णीकरणेन अतुच्छं बहुलमुच्छलदुत्पतच्छोणितं रुधिरं तस्य च्छटा धारास्तासामविच्छिन्नोपहारोऽखण्डपूजनं तेन सन्तर्पितास्तृप्तिं नीता मदपुरुषा राक्षसा यैस्ते तथा तैः। The elephants are described to have satisfied the demons by offering the excessive quantity of blood of all kinds of creatures that were crushed under the feet of the former. **तुरगालोकं पुरः प्रतिभासमानैः**—Read **श्रुतसागर**—तुरगमालोक्य तुरगरथ्यास्तिपुरस्सरं देदीप्यमानैः। **छत्रगोचरं परिलुम्पमानैः**—Read **श्रुतसागर**—छत्रगोचरमातपवारणविषयं परिलुम्पमानैः। छत्राणि त्रोटयद्भिरित्यर्थः। **गिरिकलीला..... गण्डशैलैः**—Read **श्रुतसागर**—गिरिकलीला कन्दुकक्रीडा तद्वत् लुलितानि उच्छूलितानि महाशिलाना शकलानि खण्डानि तैर्निष्पिष्टाश्चूर्णीकृता गण्डशैलाः क्षुद्रपर्वताः यैस्ते तथा तैः। **रविरथेषाडम्बरम्**—Read **श्रुतसागर**—रवेः श्रीसूर्यस्य रथस्य या ईषा दीर्घकाष्ठं तस्या आडम्बरमाटोपं (दधानैः)। **कोशकोटस्रोतःसु**—Read **श्रुतसागर**—कोशो मेढ्ररन्ध्रं कटो गण्डस्थलं तयोः स्रोतःसु तत्र मदप्रवाहेषु (दधानैः)। **बिन्दुषु**—Read **श्रुतसागर**—मदबिन्दुषु। **विटपिभङ्ग.....प्रणिधिभिः**—Read **श्रुतसागर**—विटपिनां वृक्षाणां भङ्गवत्रोटनवदवधीरिता आधोरणानां हस्तिपकानां प्रणिधयो याचनानि वा अङ्कुशप्रयोगा यैस्ते तथा तैः। **मुखपटाभोगवत्**—*Read* **श्रुतसागर**—*कृत्रिमसिंहमुखालेपवत्।* **उल्लङ्घि.......मार्गैः**—Read **श्रुतसागर**—उल्लङ्घितानि उत्फालेन मापितानि बलवेगेन कृत्वा वीथ्याः परिमाणानि मधावद्भूमिदैर्घ्या यैस्ते तथा तैः।

॥ **कोणकोटि......मण्डलः**—Read **श्रुतसागर**—कोणो मूलच(व)ककाष्ठयष्टिस्तस्य कोटिरग्रं तया कलकन्दुकस्य अम्बरचारणा गगननयनमाकाशप्रापणं तया परिस्खलितानि अवष्टब्धानि दिग्देवतानां विमानमण्डलानि व्योमयानसमूहा येन स तथा। The idea is that as the king led up high in the sky the playing ball, with the edge of the stick, it caused an interruption to the balloons of the deities of the quarters. **कुल्कीलकुहरा......घोरासुः**—Read **श्रुतसागर**—कुलीलना पर्वताना

कुहराणि विवराणि जिघ्रन्ति गन्धं गृह्णन्त्येवंशीलाः कुत्कीलकुहरघ्राणिणस्ते च ते घूका उलूकपक्षिणस्तेषां धूत्कारैः रौद्रशब्दैर्घोरा भयानकास्तथा तासु। **पूतना...भैरवाः**— Read **श्रुतसागर**—पूतनानां राक्षसीनां करेषु हस्तेषु उद्भरा उत्कटा ये डमरुका ढक्कास्तेषामारवाः शब्दास्तैर्भैरवा भयानकास्ताः । **साश्चर्यशौर्यनिर्जित..... चरणकमलः**—Read **श्रुतसागर**—साश्चर्यं चतुरचित्तचमत्कारकारकं यच्छौर्यं बलं तेन पूर्वं निर्जिता भङ्गं प्रापिताः पश्चाद्विनता नम्रीभूता ये दुर्वारवीरावतारभूपालाः। दुःखेन महता कष्टेन वारयितुमशक्या दुर्वाराः। वीरेषु सुभटेष्ववतारो जन्म येषां ते दुर्वारवीरावताराः ते च ते भूपाला राजानस्तेषां चूडामणयः शिरोरत्नानि तेषां मरीचयः किरणास्तेषां प्रसरो व्याप्तिः स एव सरस्तडागस्तत्र ताण्डवितं चरणकमलं येन सः ।

## Page 9.

**शत्रुक्षत्रिय.....पातानाम्**—Read **श्रुतसागर**—शत्रुक्षत्रियाः सपत्नराजपुत्रास्तेषां कलत्राणि यौवनवत्यः स्त्रियस्तासां नेत्राणां लोचनानामपाङ्गसङ्गेन, कटाक्षसङ्गेन कटाक्षमङ्गल्या उल्लोला उत्कटा लाजाञ्जलयः आर्द्रतण्डुलप्रसृतयस्तासां पाताः पतनानि तेषाम्। **नाभिवलभिगर्भसम्भोगभुजङ्गः**—Read **श्रुतसागर**—नाभयस्तुन्दिकास्ता एव वलभयः पटलाधारवंशपञ्जराणि तासां गर्भसम्भोगे मध्यप्रदेशक्रीडने भुजङ्गो नागेन्द्रसदृशः । Here the description of the spring is given.—

12. **माकन्दमञ्जरी.....मानसेषु**—Read **श्रुतसागर**—माकन्दानामाम्रतरूणां मञ्जर्यो वल्लर्यस्तासां जालकानि समूहास्तेषामवलोकनेनोद्वीक्षणेनोल्लासितानि आनन्दं प्रापितानि विलासिनां कामुकानां मानसानि चित्तानि येषु ते तथा तेषु (मधुमासेषु). **मलयाचला....दुकूलेषु**—Read **श्रुतसागर**—मलयाचलश्चन्दनगिरिस्तस्यावनी भूमिस्तत्र यद्वनं चन्दनतरुवनं तस्य प्रसूनानि पुष्पाणि तेषां सौरभं सौगन्ध्यं तेनोद्भर उत्कटो योऽसौ मरुद्वातस्तेनोद्धूयमानानि कम्पमानानि मकरध्वजस्य कामदेवस्य ध्वजदुकूलानि केतुवस्त्राणि येषु ते तथा तेषु। **कन्दरकलाप .....शरीरेषु**—Read **श्रुतसागर**—कन्दरकलापेषु गुहासमूहेषु सञ्चरन्तः प्रविशन्तो ये रतिचतुरकिन्नराः पारापक्षिगणास्तेषां नरैर्मुखैश्चालिङ्ग्यमानानि चुम्ब्यमानानि वल्लरीणां शरीराणि कायाः येषु ते तथा तेषु। **कान्तारकुहर.....कार्मुकेषु**-कान्तारकुहरेषु उद्यानविवरेषु मध्येषु विहरन्तः पर्यटन्तो ये कोकिलाः पुंस्कोकिलास्तेषां कुलानि समूहास्तेषां कोलाहलः कलकलशब्दस्तेनो ध्वनितः प्रकटीकृतोऽनङ्ग एव व्यालः कन्दर्पसर्पः. (अनेननतो पादस्यात्। तेन व्याकुलिता विह्वलीकृताः कामुकाः

स्त्रीलम्पटपुरुषाः येषु ते तथा तेषु । **मानिनामपि.....देषु**–Read **श्रुतसागर**–मानिनामपि *अभिमानवतामपि । अपि शब्दाद्विगर्नानामपि । प्रियतमानां स्त्रीणां* प्रसादनेषु प्रसन्नीकरणेषु यद्दैन्यमकिञ्चित्करं याचकत्वं तस्य निनादा (नि) येस्ते तथा तेषु । **यमिनामपि......तनेषु**—Read **श्रुतसागर**—अव्रतानामपि रतेः सम्भोगक्रीडायाः यो रसोऽनुरागः स एवातङ्कः सद्यप्राणहरो व्याधिस्तस्यायतनानि आस्पदीभूतानि तेषु । **कामाश्रम......रिताम्**—Read **श्रुतसागर**—कामस्य कन्दर्पस्याश्रमो निवासभूमिः । स्मरमन्दिरमित्यर्थः । तस्य संबन्धिनी या धर्मचारिता संभोगक्रीडा ताम् ।

13. **चरणकिसलय.....निर्गमाभिः**—Read **श्रुतसागर**—चरणाः पादास्त एव किसलयानि कुम्पलानि । कोमलारुणवर्णसंयुक्तत्वात् । तेषामुद्गमः क्रीडनं तेन मसृणिताः कोमलीकृताः मार्गनिर्गमाः पथप्रवृत्तयः याभिस्तास्तथा ताभिः । **पादनख .....मण्डलाभिः**— Read **श्रुतसागर**—पादनखाना चरणपुनर्भवाना मयूखास्तैरुपहारितानि पूजितानि विहारस्य पर्यटनस्य महीमण्डलानि भूमिदेशा याभिस्तास्तथा ताभिः । **मेखलाकलाप..... मालाभिः**--Read **श्रुतसागर**—मेखलाकलापो जघनोपरिस्थितवस्त्रोच्चयस्तेन वलिता वेष्टिता ऊरुस्तम्भिकाः पिच्छण्डल-स्तम्भास्ताभिः पुनरुक्ता द्विगुणीकृता काननदेवतानामुद्यानदेवताना तोरणमाला महोत्सववन्दनमाला याभिस्तास्तथा ताभिः । In the spring, naturally the *trees and the creapers were laiden with blossoms ; so it was* looking as if an arched doorways of the sylvan doities were decorated. The poet now describes that the plantain trees ( ऊरुस्तम्भिकाः ) which were wrapped up with the knots ( उच्चय ) of the garments that were worne on the buttocks ( मेखलाकलाप ) by the young ladies with whom the king ( मारिदत्त ) used to play in the garden were considered as an additional wreaths of portals. **नितम्बस्थली .....वेशाभिः**—Read **श्रुतसागर**—कटिप्रदेशाग्रस्थलीभिर्द्विगुणितः अशोकतरूणां नयनसन्निवेशः मध्यस्थानं याभिस्तास्तथा ताभिः । **नाभिगर्भनिर्भर्मित.....राभिः**—*Read* **श्रुतसागर**—नाभिगर्भेण नाभिमध्येन निर्भर्मिता निरस्कृता क्रीडाकुञ्जकीलकन्दरा क्रीडास्वरणगुहावर्तगुहा याभिस्तास्तथा ताभिः । **कपोलतलो.....पद्धत्याभिः**—Read **श्रुतसागर**—कपोलतलेषु गण्डस्थलीषूद्गमन्ति उदयमानानि यानि स्वेदजालानि तान्येव मञ्जरीजालानि

वल्लरीसमूहास्तैः कुसुमिताः पुष्पसंयुक्ताः कृता अवतंसपल्लवाः कर्णपूरप्रवाला याभिस्ता तथा ताभिः।

**Page 10.**

14. Here is given the description of a oblong lake — **मुक्ताफलपुलिनपेशलपर्यन्तासु**—Read **श्रुतसागर**-मुक्ताफलानां पुलिनैस्तोयोत्थापितद्वीपैः। 'तोयोत्थितं तत्पुलिनम्' इति वचनात्। तैः पेशला अतिमनोहराः पर्यन्ताः प्रान्तदेशा यासां तास्तथा तासु। **करिमुख ....भोगासु**—Read **श्रुतसागर**—करिणा कृत्रिमहस्तिना तथाविधाना मकराणां जलचराणां च मुखैर्मुच्यमानं त्यज्यमानं यद्वारि जलं तेन भरिता पूरिता आभोगा. विस्तारा यासां तास्तथा तासु। **कर्पूरधारी .... मासु**—Read **श्रुतसागर**—कर्पूरधारीभिर्हिमवालुकाशलाकाभिर्दन्तुर उन्नततरङ्गसङ्गमः कल्लोलसङ्गतिर्यास्ते तास्तथा तासु। **मन्त्रवादो क्तिर . .नीषु**—Read **श्रुतसागर**—विविधैर्नानाप्रकारैर्यन्त्रैर्वंशनालिकाभिश्चाधिन्यः स्तुत्यास्तास्तथा तासु। काश्चित्। मन्त्रवादोक्तिष्विव। यथा मन्त्रवादोक्तयो वचनानि अनेकयन्त्राणां सिद्धचक्रादीनां कथिका भवन्ति।

15 Here the King considers himself a partial incarnation of God —**अन्तर्लीनसत्त्वः.....बहुलोऽपि**—Read **श्रुतसागर**—राजसी प्रकृति। अहं राजा इत्यहङ्कारवान् इति रजः। रजश्च तमश्च दैन्यलक्षणं ताभ्यां बहुलोऽपि प्रचुरोऽपि सन्नन्तर्लीनसत्त्व अन्तर्मनसि अन्तरात्मनि वा लीनं तन्मयतां गतं सत्त्वं पुण्यपरिणामः प्रसन्नता यस्य सोऽन्तर्लीनसत्त्वः। क इव। शर्वरीवातूल इव। यथा रात्रिसम्बधी वातूलो वातमण्डली अन्तर्लीनसत्त्वो मध्यप्रविष्टपिशाचो भवति। एवगुणविशिष्टोऽप्यात्मानं देवावतारं मानितवान्। The King who is void *of good quality but has mental darkness is compared to the* mid-night whirlwind which has a goblin in it (अन्तर्लीनसत्त्व) **व्यसनेषु**—Read **श्रुतसागर**—(१) व्यसनानि वाग्दण्डपारुष्ये अर्थदूषणं पानं स्त्री मृगया द्यूतं चेति सप्त व्यसनानि तेषु। (२) विविधेषु असनेषु क्षेपणेषु। **धनुग्रहः**—Read **श्रुतसागर**—धनुग्रहोऽसाध्यपिशाचविशेषः। **रविरिव .... क्षणोऽपि**—Read **श्रुतसागर**—रविरिव कुवलयानवेक्षणोऽपि (आत्मानं दैवायत्तं ज्ञातवान्।) महीमनुष्यस्य प्रभवाद्यसम्भावनासु च वर्तमानोऽप्यपिशब्दोऽत्र महांशो ज्ञातव्यः। सर्वत्रापि महांशो ज्ञातव्यः। क इव। रविरिव। यथा रविः श्रीभास्करः कुवलयानामुत्पलानामवेक्षणं न करोति। **विजात्यानाम्**—Read **श्रुतसागर**—(१) विजातीनां नीचजातीनामानन्दनं यस्मात् इति विजात्यानन्दनः।

स्त्रीलम्पटपुरुषाः येषु ते तथा तेषु। **माननिामपि ....द्वेषु**–Read **श्रुतसागर**–माननिामपि अभिमानवतामपि। अपि शब्दान्निर्मानानामपि। प्रियतमाना स्त्रीणा प्रमादनेषु प्रसन्नीकरणेषु यद्दैन्यमकिञ्चित्करं यान्चत्वं तस्य निनादा (नि) मैस्ते तथा तेषु। **यमिनामपि ...तनेषु**—Read **श्रुतसागर**—अव्रतानामपि रतः सम्भोगक्रीडायाः यो रसोऽनुरागः स एवातङ्कः सत्प्राणहरो व्याधिस्तस्यायतनानि आस्पदीभूतानि तेषु। **कामाश्रम ....रिताम्**—Read **श्रुतसागर**—कामस्य कन्दर्पस्याश्रमो निवासभूमिः। स्मरमन्दिरमित्यर्थः। तस्य संबन्धिनी या धर्मचारिता संभोगक्रीडा ताम्।

13. **चरणकिसलय ...निर्गमाभिः**—*Read* **श्रुतसागर**—चरणाः पादास्त एव किसल्यानि कुम्पलानि। कोमलारुणवर्णसंयुक्तत्वात्। तेषामुद्गमः नीडन तेन मसृणिता॰ कोमलीकृता॰ मार्गनिर्गमाः पथप्रवृत्तयः याभिस्तास्तथा ताभिः। **पादनख ... मण्डलाभिः**—Read **श्रुतसागर**—पादनखाना चरणपुनर्भवाना मयूखास्तैरुपहारितानि पूजितानि विहारस्य पर्यटनस्य महीमण्डलानि भूमिदेशा याभिस्तास्तथा ताभि। **मेखलाकलाप . मालाभिः**—*Read* **श्रुतसागर**—मेखलाकलापो जघनोपरिस्थितवस्त्रोच्चयस्तेन कलिता वेष्टिता ऊरुस्तम्भिका. पिचण्डल-स्तम्भास्ताभिः पुनरुक्ता द्विगुणीकृता काननदेवतानामुद्यानदेवताना तोरणमाला महोत्सववन्दनमाला याभिस्तास्तथा ताभि.। In the spring, naturally the trees and the creapers were laiden with blossoms, so it was *looking as if an arched doorways of the sylvan deities were* decorated The poet now describes that the plantain trees (ऊरुस्तम्भिकाः) which were wrapped up with the knots (उच्चय) of the garments that were worne on the buttocks (मेखलकलाप) by the young ladies with whom the king (मारिदत्त) used to play *in the garden were considered as an additional* wreaths of portals. **नितम्बस्थली ....वेशाभिः**—Read **श्रुतसागर**—कटिपश्चाद्भागस्थलीभिर्द्विगुणितः अशोकशाखाना शयनसन्निवेशः शय्यास्थान याभिस्तास्तथा ताभिः। **नाभिगर्भनिर्भर्सित ....राभिः**—Read **श्रुतसागर**—नाभिगर्भेण नाभिमध्येन निर्मर्म्मिता तिरस्कृता नीडाकुन्दीलकन्दरा नीडारस्णशुद्धपर्वतगुहा याभिस्तास्तथा ताभि। **कपोलतलो ....पल्लवाभिः**—Read **श्रुतसागर**—कपोलतलेषु गण्डस्थलीषूद्गमन्ति उदयमानानि यानि स्वेदजालानि तान्येव मञ्जरीजालानि

वल्लरीसमूहास्तै· कुसुमिताः पुष्पसंयुक्ताः कृता अवतंसपल्लवा· कर्णपूरप्रवाला याभिस्ता तथा ताभिः।

## Page 10.

14. Here is given the description of a oblong lake—**मुक्ताफलपुलिनपेशलपर्यन्तासु**—Read **श्रुतसागर**–मुक्ताफलाना पुलिनैस्तोयोत्थापितद्वीपैः। 'तोयोत्थितं तत्पुलिनम्' इति वचनात्। तैः पेशला अतिमनोहराः पर्यन्ताः प्रान्तदेशा यासां तास्तथा तासु। **करिमुख .... भोगासु**—Read **श्रुतसागर**—करिणा कृत्रिमहस्तिना तथाविधाना मकराणां जलचराणां च मुखैर्मुच्यमानं त्यज्यमानं यद्वारि जलं तेन भरिता पूरिता आभोगा· विस्तारा यासां तास्तथा तासु। **कर्पूरस्पारी .... मासु**—Read **श्रुतसागर**—कर्पूरपारीभिर्हिमवालुकाशलाकाभिर्दन्तुरं उन्नतस्तरङ्गसङ्गमः कल्लोलसङ्गतिर्यासां तास्तथा तासु। **मन्त्रवादोक्तिर . . नीपु**—Read **श्रुतसागर**—विविधैर्नानाप्रकारैर्यन्त्रैर्वंशनालिकाभिः शाखिन्यः सुलास्तास्तथा तासु। कास्विव। मन्त्रवादोक्तिष्विव। यथा मन्त्रवादोक्तयो वचनानि अनेकयन्त्राणां सिद्धचक्रादीनां कथिका भवन्ति।

15 Here the King considers himself a partial incarnation of God—**अन्तर्लीनसत्त्वः ....बहुलोऽपि**—Read **श्रुतसागर**—राजसी प्रकृतिः। अहं राजा इत्यहङ्कारवान् इति रजः। रजश्च तमश्च दैन्यलक्षणं ताभ्यां बहुलोऽपि प्रचुरोऽपि सन्नन्तर्लीनसत्त्वः अन्तर्मनसि अन्तरात्मनि वा लीनं तन्मयतां गतं सत्त्वं पुण्यपरिणामः प्रसन्नता यस्य सोऽन्तर्लीनसत्त्वः। क इव। शर्वरीवातूल इव। यथा रात्रिसम्बधी वातूलो वातमण्डली अन्तर्लीनसत्त्वो मध्यप्रविष्टपिशाचो भवति। एवंगुणविशिष्टोऽप्यात्मानं देवावतारं मानितवान्। The King who is void of good quality but has mental darkness is compared to the mid-night whirlwind which has a goblin in it (अन्तर्लीनसत्त्व) **व्यसनेषु**—Read **श्रुतसागर**—(१) व्यसनानि वाग्दण्डपारुष्ये अर्थदूषणं पानं स्त्री मृगया द्यूतं चेति सप्त व्यसनानि तेषु। (२) विविधेषु असनेषु क्षेपणेषु। **धनुर्ग्रहः**—Read **श्रुतसागर**—धनुर्ग्रहोऽसाध्यपिशाचविशेषः। **रविरिव ..... क्षणोऽपि**—Read **श्रुतसागर**—रविरिव कुवलयानवेक्षणोऽपि (आत्मानं दैवायत्तं ज्ञातवान्।) गर्हासमुच्चय प्रश्नशङ्कासम्भावनासु च वर्तमानोऽप्यपिशब्दोऽत्र गर्हायां ज्ञातव्यः। सर्वेणापि गर्हायां ज्ञातव्य। क इव। रविरिव। यथा रविः श्रीभास्कर कुवलयानामुत्पलानामवेक्षणं न करोति। **विजात्यानाम्**—Read **श्रुतसागर**—(१) विजातीनां नीचजातीनामानन्दनं यस्मात् इति विजात्यानन्दनः।

